१९६ शुभ्रादिभ्यश्च ।
१९७ लक्षणश्यामयोर्वसिष्ठे ।
१९८ विकर्णकुषीतकात्काश्यपे ।
१९९ भ्रुवो वुक्च ।
२०० कल्याणादीनामिनङ् ।
२०१ कुलटाया वा ।
२०२ चटकचटकाभ्यामैरक् ।
२०३ स्त्रियामपत्ये लुक् ।
२०४ गोधाया ढ्रक् २०५ आरगुदीचाम्
२०६ क्षुद्राभ्यो वा २०७ पितृष्वसुश्छण्
२०८ ढकि लोपः २०९ मातृष्वसुश्च
२१० चतुष्पाद्भ्यो ढञ् ।
२११ गृष्ट्यादिभ्यश्च २१२ श्वसुराद्यत्
२१३ राज्ञो जातौ २१४ क्षत्राद्घः
२१५ कुलात्खः ।
२१६ अपूर्वपदादन्यतरस्यां यड्ढकञौ
२१७ महाकुलादञ्खञौ ।
२१८ दुष्कुलाड्ढक् २१९ स्वसुश्छः
२२० भ्रातुर्व्यच्च २२१ व्यन्सपत्ने ।
२२ रेवत्यादिभ्यष्ठक् ।
२२३ गोत्रस्त्रियाः कुत्सने ण च ।
२२४ वृद्धाट्ठक् सौवीरेषु बहुलम् ।
२२५ फिञश्छ च ।
२२६ फाण्टाहृतिमिमताभ्यां णफिञौ
२२७ कुर्वादिभ्यो ण्यः ।
२२८ सम्राजात्क्षत्रिये ।
२२९ वेनाच्छन्दसि ।
२३० सेनान्तलक्षणकारिभ्यश्च ।
२३१ उदीचामिञ् ।
२३२ तिकादिभ्यः फिञ् ।
२३३ कौसल्यकार्मार्याभ्यां च ।
२३४ अणो द्व्यचः २३५ त्यदादीनां वा
२३६ उदीचां वृद्धादगोत्रात् ।
२३७ वाकिनादीनां कुक् च ।
२३८ चर्मिवर्मिणोर्नलोपश्च ।
२३९ पुत्रान्तादन्यतरस्याम् ।
२४० प्राचामवृद्धात्फिन् बहुलम् ।
२४१ मनोर्जातावञ्यतौ षुक् च ।
२४२ अपत्यं पौत्रप्रभृति गोत्रम् ।
२४३ जीवति तु वंश्ये युवा ।
२४४ भ्रातरि ज्यायसि ।
२४५ वान्यस्मिन्सपिण्डे स्थविरतरे-
जीवति २४६ वृद्धस्य च पूजायाम्
२४७ यूनश्च कुत्सायाम् ।
२४८ जनपदशब्दात्क्षत्रियादञ् ।
२४९ क्षत्रियसमानाद्राजन्यपर्यवत्
२५० साल्वेयगान्धारिभ्यां च ।
२५१ द्व्यञ्मगधकलिङ्गसूरमसादण् ।
२५२ वृद्धेत्कोसलाजादाञ्ञ्यङ् ।
२५३ पूरोरण् २५४ पाण्डोर्ड्यण् ।
२५५ कुरुनादिभ्यो ण्यः ।
२५६ साल्वावयवप्रत्यग्रथकलकूटाश्मका
दिञ् । २५७ ते तद्राजाः ।
२५८ कम्बोजादिभ्यो लुक् ।
२५९ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।
२६० अतश्च ।
२६१ न प्राच्यभर्गादियौधेयादिभ्यः ।

इति प्रथमः पादः

# द्वितीयः पादः

## (४—२)

१ तेन रक्तं रागात् २ लाक्षारोचनाट्ठक्
३ शकलकर्दमादण् च ४ नील्या अन्
५ पीतात्कन् ६ हरिद्रामहारजनाभ्यामञ् ।
७ नक्षत्रेण युक्तः कालः ।
८ लुबविशेषे ।
९ संज्ञायां श्रवणाश्वत्थाभ्याम् ।
१० द्वन्द्वाच्छः ११ दृष्टं साम ।
१२ सर्वत्राग्निकलिभ्यां ढक् ।
१३ दृष्टे सामनि अण् वा डित् ।
१४ जाते चार्थे पुनर्विहितो वा डित्
१५ तीयादीकक्वा स्वार्थेऽविद्यायाम्
१६ गोत्राद् दृष्टेसामनि वुञ् ।
१७ वामदेवाड्ड्यड्ड्यौ ।
१८ परिवृतो रथः ।
१९ पाण्डुकम्बलादिनिः ।
२० द्वैपवैयाघ्रादञ् ।
२१ कौमारापूर्ववचने ।
२२ तत्रोद्धृतममत्रेभ्यः ।
२३ स्थण्डिलाच्छयितरि व्रते ।
२४ संस्कृतं भक्षाः २५ शूलोखाद्यत्
२६ दध्नष्ठक् ।
२७ उदश्वितोऽन्यतरस्याम् ।
२८ क्षीराड्ढञ् ।
२९ साऽस्मिन्पौर्णमासीति संज्ञायाम् ।
३० आग्रहायण्यश्वत्थाट्ठक् ।
३१ विभाषा फल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।

३२ सास्य देवता ।
३३ कस्येत् ३४ शुक्राद्घन् ।
३५ अपोनप्त्रपान्नप्तृशतरुद्रेभ्यो घछञौ । ३६ महेन्द्रादण् च ।
३७ पैङ्गाक्षीपुत्रादिभ्यश्छः ।
३८ सोमाट्ट्यण् ।
३९ वाय्वृतुपित्रुषसो यत् ।
४० द्यावापृथिविशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च । ४१ अग्नेर्ढक्
४२ कालेभ्यो भववत् ।
४३ महाराजप्रोष्ठपदाट्ठञ्
४४ नवयज्ञादिभ्यस्तदस्मिन्वर्ततेऽर्थे । ४५ पूर्णमासादण् ।
४६ पितृव्यमातुलमातामहपितामहाः
४७ पितृमातृभ्यां डामहच् पितरि षिच्चमातरि ।
४८ अवेर्दुग्धे सोढदूसमरीसचः ।
४९ तिलान्निष्फलात्पिञ्जपेजौ डिच्चपिञ्जश्छन्दसि ।
५० तस्य समूहः ।
५१ गुणादिभ्यो ग्रामच्
५२ भिक्षादिभ्योऽण् ।
५३ गोत्रोक्षोष्ट्रोरभ्रराजन्यराजपुत्रवत्समनुष्याजवृद्धाद्वुञ् ।
५४ केदाराद्यञ्च ५५ गणिकायायञ् ५६ ठञ् कवचिनश्च ।
५७ ब्राह्मणमाणववाडवपृष्ठाद्यन् ।
५८ अह्नः खः क्रतौ ।

५९ पश्र्वाणस् ६० वातादूलः ।
६१ ग्रामजनबन्धुसहायगजेभ्यस्तल्
६२ अनुदात्तादेरञ् ।
६३ खण्डिकादिभ्यश्च ।
६४ क्षुद्रकमालवात्सेनासंज्ञायाम् ।
६५ चरणेभ्योधर्मवत् ।
६६ अचित्तहस्तिनभ्य ठक् ६७ धेनोरनञि
६८ केशाश्वाभ्यां यञ्छावन्यत
रस्याम ६९ पाशादिभ्यो यः ।
७० खलगोरथात् ।
७१ इनित्रकट्यचश्च यथासंख्यम्
७२ खलादिभ्य इनिः ।
७३ कमलादिभ्यः खण्डच् ।
७४ नरकरितुरङ्गाणां स्कन्धच् ।
७५ पूर्वादिभ्यः काण्डः ।
७६ विषयो देशे ।
७७ राजन्यादिभ्यो वुञ् ।
७८ भौरिक्यादिभ्यो विधल् ।
७९ ऐषुकादिभ्यो भक्तल् ।
८० सोऽस्यादिरितिच्छन्दसः
प्रगाथेषु ।
८१ नपुंसके स्वार्थे च ।
८२ संग्रामे प्रयोजनोद्धृभ्यः ।
८३ तदस्यांप्रहरणमिति क्रीडायांणः
८४ घञःसास्यां क्रियेति ञः ।
८५ तदधीते तद्वेद ।
८६ क्रतूक्थादिसूत्रान्तादकल्पादेष्ठक्
८७ लक्षणकल्पान्ताच्च ।
८८ विद्यान्ताच्चाऽनाङ्गक्षत्रधर्मसं-
सर्गत्रिपूर्वात् ।

८९ आख्यानाख्यायिकाभ्यामर्थग्रहणे
९० इतिहासपुराणाभ्यां रूपग्रहणे ।
९१ सर्वसादेर्द्विगोश्च लः ।
९२ अनुसूलंक्ष्यलक्षणे च ।
९३ पदात्तरपदादिकन् ।
९४ शतषष्ठेः षिकन् ९५ पथोवहुलम्
९६ क्रमादिभ्यो वुन् ।
९७ अनुब्राह्मणादिनिः ।
९८ वसन्तादिभ्यष्ठक् ।
९९ प्रोक्ताल्लुक् ।
१०० सूत्राचवसंख्याप्रकृतेः कोपधात्
१०१ छन्दोब्राह्मणानि च तद्विषयाणि
१०२ तदस्मिन्नस्तीति देशे तन्नाम्नि
१०३ तेननिर्वृत्तम् १०४ तस्य निवासः
१०५ अदूरभवश्च १०६ ओरञ् ।
१०७ मतोश्च वह्वजङ्गात् ।
१०८ बह्वचः कूपेषु ।
१०९ उदक्च विपाशः ।
११० सङ्कलादिभ्यश्च ।
१११ स्त्रीषुसौवीरसाल्वप्राक्षु ।
११२ सुवास्त्वादिभ्योऽण् ११३ रोणी
११४ कोपधाच्च ।
११५ वुञ्छण्कठजिलसेनिरढञ्ण्ययफ-
क्फिञिञ्ञ्यकक्ठकोऽरीहणकृ-
शाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्म-
सखिसङ्काशवलपक्षकर्णसुतङ्ग-
मप्रगदिनवराहकुमुदादिभ्यः ।
११६ जनपदेलुप् ।
११७ वरणादिभ्यश्च ।
११८ शर्कराया वा ११९ ठच्छौ च ।

० नद्यांमतुप्   मध्वादिभ्य च
१२२ कुमुदनडवेतसमहिषेभ्योडमतुप्
१२३ नडशादाड्ड्वलच् ।
१२४ शिखाया वलच् ।
१२५ उत्करादिभ्यश्छः ।
१२६ नडादीनां कुक् च ।
१२७ कुञ्याया ह्रस्वत्वं च ।
१२८ तक्षन्नलोपश्च १२९ शेषे ।
१३० अवारपारात्खः ।
१३१ विगृहीताद्विपरीताच्च ।
१३२ राष्ट्रद्धचछौ १३३ ग्रामाद्यखञौ
१३४ कत्त्र्यादिभ्यो ढकञ् ।
१३५ कुड्यकुल्ययोर्यलोपश्च ।
१३६ कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु
१३७ नद्यादिभ्यो ढक् ।
१३८ दक्षिणापश्चात्पुरसस्त्यक् ।
१३९ कापिशीवाह्ल्युर्दिभ्यः ष्फक् ।
१४० रङ्कोरमपुष्येऽण् च ।
१४१ द्युप्रागपागुदक्प्रवीचो यत् ।
१४२ कन्थायाष्ठक् १४३ वर्णौ वुक् ।
१४४ अव्ययात्त्यप् १४५ नेर्ध्रुवे ।
१४६ निसो गते १४७ आविसश्छन्दसि
१४८ अरण्याण्णः १४९ दूरादेत्यः ।
१५० उत्तरादाहञ् ।
१५१ ऐषमोह्योऽन्यतरस्याम् ।
१५२ तीररुप्योत्तरपदादञ्ञौ ।
१५३ दिक्पूर्वपदात्संज्ञायां ञः ।
१५४ मद्रेभ्योऽञ् ।
१५५ उदीच्चग्रामाचच बह्वचोऽन्तोदात्तात्
१५६ प्रस्थोत्तरपदपलद्यादिकोपधादण्

१५७ कण्वादिभ्यो गोत्रे १५८ इञश्च
१५९ न द्व्यचः प्राच्यभरतेषु ।
१६० वृद्धाच्छः १३६ भवतष्ठक्छसौ
१६१ काश्यादिभ्यष्ठञ्ञिठौ ।
१६२ आपदादिपूर्वपदात्कालान्तात् ।
१६३ वाहीकग्रामेभ्यश्च ।
१६४ विभाषोशीनरेषु ।
१६५ ओर्देशाट्ठञ् १६६ वृद्धात्प्राचाम्
१६७ धन्वयोपधाद्वुञ् ।
१६८ प्रस्थपुरवहान्ताच्च ।
१६९ रापधेतो प्राचाम ।
१७० जनपदतदवध्योश्च ।
१७१ अवृद्धादपि बहुवचनविषयात् ।
१७२ कच्छाग्निवक्त्रगर्तोत्तरपदात् ।
१७३ धूमादिभ्यश्च ।
१७४ समुद्रान्नावि मनुष्ये च ।
१७५ कूलात्सौवीरेषु ।
१७६ नगरात्कुत्सनप्रावीण्ययोः ।
१७७ अरण्यान्यथ्यध्यायन्यायविहार-मनुष्यहस्तिषु ।
१७८ वा गोमयेषु ।
१७९ विभाषा कुरुयुगन्धराभ्याम् ।
१८० मद्रवृज्योः कन् ।
१८१ कोपधादण् १८२ कच्छादिभ्यश्च
१८३ मनुष्यतत्स्थयोर्वुञ् ।
१८४ अपदातौ साल्वात् ।
१८५ गोयवाग्वोश्च १८६ गर्तोत्तरपदाच्छः
१८७ गहादिभ्यश्च ।
१८८ मुखपार्श्वतसोर्लोपश्च ।
१८९ कुग्जनपरयोश्च ।

१९० वेणुकादिभ्यश्छण् ।
१९१ मध्यममध्यमं चाण्चरणे ।
१९२ प्राचां कटादेः १९३ राज्ञः क च
१९४ वृद्धादकेकान्तखकोपधात् ।
१९५ कन्थापलदनगरग्रामह्रदोत्तरपदात्
१९६ पर्वताच्च १९७ विभाषाऽमनुष्ये
१९८ कृकणपर्णाद् भारद्वाजे ।

★इति द्वितीयः पादः★

## तृतीयः पादः
## (४—३)

१ युष्मदस्मदोरन्यतरस्यां खञ्च
२ तस्मिन्नणि च युष्माकास्माकौ
३ तवकममकावेकवचने ।
४ अर्धाद्यत् ५ सपूर्वपदाट्ठञ् ।
६ परावराधमोत्तमपूर्वाच्च ।
७ दिक्पूर्वपदाट्ठञ्च ।
८ ग्रामजनपदैकदेशादञ्ठञौ ।
९ मध्यादिभ्यां मः ।
१० अवोऽधसोर्लोपश्च ।
११ अः साम्प्रतिके ।
१२ द्वीपादनुसमुद्रं यञ् १३ कालाट्ठञ्
१४ कालशब्दात्ख च तदन्तात् ।
१५ श्राद्धे शरदः ।
१६ विभाषा रोगातपयोः ।
१७ निशाप्रदोषेभ्यः ।
१८ श्वसस्तुट् च ।
१९ संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ।
२० संवत्सरात्फलपर्वणोः ।
२१ प्रावृष एण्यः २२ वर्षाभ्यष्ठक्
२३ छन्दसि ठञ् २४ वसन्ताच्च
२५ हेमन्ताच्च ।
२६ सर्वत्राण च तलोपश्च ।
२७ सायं चिरं प्राह्णे प्रगेऽव्ययेभ्य-
ष्ट्युट्युलौ तुट् च ।
२८ चिरपरुत्परारिभ्यस्त्नः ।
२९ छन्दसि प्रगस्य गलोपश्च ।
३० अग्रपश्चादन्तेभ्यो डिमच् ।
३१ विभाषा पूर्वाह्णापराह्णाभ्याम्
३२ तत्र जातः ३३ प्रावृषष्ठप् ।
३४ संज्ञायां शरदो वुन् ।
३५ पूर्वाह्णापराह्णार्द्रामूलप्रदोषा-
वस्करान् वुन् ।
३६ पथः पन्थ च ।
३७ अमावास्याया वा ।
३८ अ च ३९ सिन्ध्वपकराभ्यां-
कन्नणञौ च यथासंख्यम् ।
४० श्रविष्ठाफल्गुन्यनुराधास्वाति-
तिष्यपुनर्वसुहस्तविशाखाषाढा-
बहुलाल्लुक् ।
४१ चित्रारेवतीरोहिणीभ्यः स्त्रियाम्
४२ फल्गुन्यषाढाभ्यां टानौ च ।
४३ श्रविष्ठाषाढाभ्यां छण् च ।
४४ स्थानान्तगोशालखरशालाच्च
४५ वत्सशालाभिजिदश्वयुक्छतभि
षजो डिच्च वा ।
४६ नक्षत्रेभ्यो बहुलम् ।
४७ कृतलब्धक्रीतकुशलाः ।
४८ प्रायभवः ।

४९ उपजानूपकर्णोपनीवेष्ठक् ।
५० सम्भूते ५१ कोशाड्ढञ् ।
५२ कालात्साधुपुष्प्यत्पच्यमानेषु ।
५३ उप्ते च ५४ आश्वयुज्या वुञ्
५५ ग्रीष्मवसन्तादन्यतरस्याम् ।
५६ देयमृणे ।
५७ कलाप्यश्वत्थयवबुसाद् वुन् ।
५८ ग्रीष्मावरसमाद् वुञ् ।
५९ सम्वत्सराग्रहायणीभ्यां ठञ्च ।
६० व्याहरति मृगः ।
६१ तदस्य सोढम् ६२ तत्र भवः
६३ दिगादिभ्यो यत् ।
६४ उदकात्संज्ञायाम् ।
६५ शरीरावयवाच्च ।
६६ दृतिकुक्षिकलशिबस्त्यस्त्यहेर्ढञ्
६७ ग्रीवाभ्योऽण् च ।
६८ गम्भीरबहिर्देवपञ्चजनेभ्यो ञ्यः
६९ अव्ययीभावाच्च ।
८० अन्तः पूर्वपदाट्ठञ् ।
८१ समानाच्च ८२ तदादेश्च ।
७२ अध्यात्मादिभ्यश्च ।
७३ ऊर्ध्वंदमोर्ध्वदेहलोकोत्तरपदेभ्यश्च
७४ मुखपार्श्वतसोरीयः ।
७५ जनपरयोः कुक्च ।
७ मध्यादीयमण्मीयाः
७७ मध्यमं दिनण् च ।
७८ स्थामन्नजिनान्ताल्लुक् ।
७९ ग्रामात्पर्यनुपूर्वात् ।
८० जिह्वामूलाङ्गुलेश्छः ।
८१ वर्गान्ताच्च ।

८३ अशब्दे यत्खावन्यतरस्याम् ।
८४ कर्णललाटात्कनलंकारे ।
८४ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।
८५ बह्वचोऽन्तोदात्ताट्ठञ् ।
८६ क्रतुयज्ञेभ्यश्च ८७ अध्यायेष्वेवर्षेः
७ पौरोडाशपुरोडाशात्ष्ठन् ।
८८ छन्दसो यदणौ ।
८९ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ।
९० अणृगयनादिभ्यः ।
९१ तत आगतः ९२ ठगायस्थानेभ्यः
९३ शुण्डिकादिभ्योऽण् ।
विद्यायोनिसंबन्धेभ्यो वुञ्
९५ ऋतष्ठञ् ९६ पितुर्यच्च
९७ गोत्रादङ्कवत् ।
९८ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः
९० मयट् च १०० प्रभवति
१०२ विदूराञ्ञ्यः ।
१०३ तद्गच्छति पथिदूतयोः
१०४ अभिनिष्क्रामति द्वारम् ।
१०५ अधिकृत्यकृते ग्रन्थे
१०६ लुब्बहुलमाख्यायिकार्थस्य प्रत्ययस्यः
१०७ शिशुक्रन्दयमसभेन्द्रजननादिभ्यश्छः
१०८ द्वन्द्वेभ्यश्चादेवासुरादिभ्यः
१०९ सोऽस्य निवासः ।
११० अभिजनश्च ।
१११ आयुधजीविभ्यश्छः पर्वते
११२ शण्डिकादिभ्यो ञ्यः
११३ सिन्धुतक्षशिलादिभ्योऽणञौ

११७ तूदीशलातुरवर्मतीकूचवारा-ड्ढक्छण्ढञ्यकः ।
११८ भक्तिः ११९ अचित्ताद्देशकाट्ठक्
१२० महाराजाट्ठञ् ।
१२१ वासुदेवार्जुनाभ्यां वुन् ।
१२२ गोत्रक्षत्रियाख्येभ्यो वुञ् ।
१२३ जनपदिनां जनपदवत्स र्वंजनपदेन समानशब्दानां बहुवचने
१२४ तेन प्रोक्तम् ।
१२५ तित्तीरिवरतन्तुखण्डिकोखाच्छण्
१२६ काश्यपकौशिकाभ्यामृषिभ्यांणिनिः
१२७ कलापिवैशम्पायनान्तेवासिभ्यश्च
१२८ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।
१२९ शौनकादिभ्यश्छन्दसि ।
१३० कठचरकाल्लुक् ।
१३१ कलापिनोऽण् ।
१३२ छगलिनो ढिनुक् ।
१३३ पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः १३४ कर्मन्दकृशाश्वादिनिः
१३५ तेनैकदिक् १३६ तसिश्च ।
१३७ उरसो यच्च १३८ उपज्ञाते ।
१३९ कृते ग्रन्थे १४० संज्ञायाम् ।
१४१ कुलालादिभ्यो वुञ् ।
१४२ छुद्राभ्रमरवटरपादपादञ् ।
१४३ तस्येदम् १४४ वहेस्तुरणिट् च
१४५ अग्नीध: शरणे रण् भं च
१४६ समिधामाधाने षेण्यण् ।
१४७ रथतदन्ताच्च यत् ।
१४८ पत्रपूर्वादञ् १४९ पत्राद्वाह्ये
१५० अध्वर्युपरिषदश्च ।
१५१ हलसीराट्ठक् ।
१५२ द्वन्द्वान्मैथुनिकाद्वुन् ।
१५३ वैराच्चादेवासुरादिभ्यः ।
१५४ गोत्राद्वुञ् १५५ चरणाद्धर्माम्नाययोः ।
१५६ संघाङ्कलक्षणघोषेष्वञ्यञि-ञामण् । १५७ शाकलाद्वा ।
१५८ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।
१५९ न दण्डमाणवान्तेवासिषु ।
१६० रैवतिकादिभ्यश्छः ।
१६१ कौपिञ्जलहास्तिपदादण् ।
१६२ आथर्वणिकस्येकलोपश्च ।
१६३ तस्य विकारः ।
१६४ अवयवे च प्राण्यौषधिवृक्षेभ्यः
१६५ बिल्वादिभ्योऽण् ।
१६६ कोपधाच्च १६७ त्रपुजतुनोः षुक्
१६८ ओरञ् १६९ अनुदात्तादेश्च
१७० पलाशादिभ्यो वा ।
१७१ शम्याष्ट्लञ् ।
१७२ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।
१७३ नित्यं वृद्धशरादिभ्यः ।
१७४ गोश्च पुरीषे १७५ पिष्टाच्च
१७६ संज्ञायां कन् ।
१७७ व्रीहेः पुरोडाशे ।
१७८ असंज्ञायां तिलयवाभ्याम् ।
१७९ द्व्यचश्छन्दसि ।
१८० नोत्वद्वर्ध्रबिल्वात् ।
१८१ बर्हिणादिभ्योऽण् ।

१८२ तालादिभ्यो धनुषि ।
१८३ जातरूपेभ्यः परिमाणे ।
१८४ प्राणिरजादिभ्योऽञ् ।
१८५ ञितश्च तत्प्रत्ययात्
१८६ क्रीतवत्परिमाणात् ।
१८७ उष्ट्राद्वुञ् १८८ उमोर्णयोर्वा
१८९ एण्या ढञ् १९०गोपयसोर्यत्
१९१ द्रोश्च । १९२ माने वयः ।
१९३ फले लुक् १९४ प्लक्षादिभ्योऽण्
१९५ जम्ब्वा वा १९६ लुप्च ।
१९७ फलपाकशुषाञ्च ।
१९८ पुष्पमूलेषु बहुलम् ।
१९९ हरीतक्यादिभ्यश्च ।
२०० कसीयपरशव्ययोर्यञञौ लुक् च

□ इति तृतीयः पादः □

## चतुर्थः पादः
## (४—४)

१ प्राग्वहतेष्ठक् ।
२ तदाहेति माशब्दादिभ्यः ठक् ।
३ आहौ प्रभूतादिभ्यः ।
४ पृच्छतौ सुस्नातादिभ्यः ।
५ गच्छतौ परदारादिभ्यः ।
६ तेन दीव्यति खनति जयति जितम्
७ संस्कृतम् कुलत्थकोपधात्
९ तरति १० गोपुच्छाट्ठञ्
११ नौद्व्यचष्ठन् १ चरति ।
१३ आकर्षात्ष्ठल् ।
१४ पर्पादिभ्यः ष्ठन् ।
१५ श्वगणाट्ठञ्च ।
१६ वेतनादिभ्यो जीवति
१७ वस्नक्रयविक्रयाट्ठन् ।
१८ आयुधाच्छ च ।
१९ हरत्युत्सङ्गादिभ्यः ।
२० भस्त्रादिभ्यःष्ठन् ।
२१ विभाषा विवधवीवधात् ।
२२ अण्कुटिलिकायाः ।
२३ निर्वृत्तेऽक्षद्यूतादिभ्यः ।
२४ क्त्रेर्मम्नित्यम् ।
२५ भावप्रत्ययान्तादिमप् ।
२६ अपमित्ययाचिताभ्यां कक्कनौ
२७ संसृष्टे २८ चूर्णादिनिः ।
२९ लवणाल्लुक् ३० मुद्गादण् ।
३१ व्यञ्जनैरुपसिक्ते ।
३२ ओजःसहोऽम्भसा वर्तते ।
३३ तत्प्रत्यनुपूर्वमीपलोमकूलम् ।
३४ परिमुखं च ।
३५ प्रयच्छति गर्ह्यम् ।
३६ वृद्धेर्वृधुषिभावः ।
३७ कुसीददशैकादशात्ष्ठन्ष्ठचौ ।
३८ उञ्छति ३९ रक्षति ।
४० शब्ददर्दुरं करोति ।
४१ पक्षिमत्स्यमृगान्हन्ति ।
४२ परिपन्थं च तिष्ठति ।
४३ माथोत्तरपदपदव्यनुपदं धावति
४४ आक्रन्दाट्ठञ्च ।

४५ पदोत्तरपदं गृह्णाति ।
४६ प्रतिकण्ठार्थललामं च ।
४७ धर्मंधर्मौ चरति ।
४८ प्रतिपथमेतिठञ्च ।
४९ समवायान् समवैति ।
५० परिषदो ण्यः । ५१ सेनाया वा
५२ संज्ञायां ललाटकुक्कुट्यौ-
पश्यति । ५३ तस्य धर्म्यम् ।
५४ अण्महिष्यादिभ्यः ।
५५ ऋतोऽञ् ५६ नराच्च ।
५७ विशासितुरिड्लोपश्च ।
५८ विभाजयितुर्णिलोपश्च ।
५९ अवक्रयः । ६० तदस्य पण्यम्
६१ लवणाट्ठञ्
६२ किशरादिभ्यःष्ठन् ।
६३ शलालुनोऽन्तरस्याम् ।
६४ शिल्पम् । ६५ मड्डुकझर्झरा-
दणन्यतरस्याम् ।
६६ प्रहरणम् ६७ परश्वधाट्ठञ् ।
६८ शक्तियष्ट्योरीकक् ।
६९ अस्ति नास्ति दिष्टं मतिः
७० शीलम ७१ छत्रादिभ्यो णः ।
७२ कर्माध्ययने वृत्तम् ।
७३ बह्वच्पूर्वपदाट्ठच् ।
७४ हितं भक्षाः ।
७५ तदस्मै दीयते नियुक्तम् ।
७६ श्राणामांसौदनाट्टिठन् ।
७७ भक्तादणन्यतरस्याम् ।
७८ तत्र नियुक्तः ।
७९ अगारान्ताट्ठन् ।

८० अध्यायिन्यदेशकालात् ।
८१ कठिनान्तप्रस्तारसंस्थानेषु-
व्यवहरति ।
८२ निकटे वसति ।
८३ आवसथात्ष्ठल् ।
८४ प्राग्घिताद्यत् ।
८५ तद्वहति रथयुगप्रासंगम् ।
८६ धुरो यड्ढकौ ८७ खःसर्वधुरात्
८८ एकधुराल्लुक् च ।
८९ शकटादण् ९० हलसीराट्ठक् ।
९१ संज्ञायांजन्या ।
९२ विध्यत्यधनुषा ९३ धनगणंलब्धा
९४ अन्नाण्णः ९५ वशं गतः ।
९६ पदमस्मिन दृश्यम् ।
९७ मूलमस्यावर्हि ।
९८ संज्ञायां धेनुष्या ।
९९ गृहपतिना संयुक्ते ञ्यः ।
१०० नौवयोधर्मविषमूलमूलसीतातुला-
भ्यस्तार्यतुल्यप्राप्यवद्ध्यानाम-
यसममसमितसम्मितेषु ।
१०१ धर्मपथ्यर्थन्यायादनपेते ।
१०२ छन्दसोर्निर्मिते ।
१०३ उरसोऽण् च ।
१०४ हृदयस्य प्रियः ।
१०५ बन्धने चर्षौ ।
१०६ मतजनहलात्करणजल्पकर्षेषु
१०७ तत्र साधुः ।
१०८ प्रतिजनादिभ्यः खञ् ।
१०९ भक्ताण्णः ११० परिषदोण्यः
१११ कथादिभ्यष्ठक् ।

११२ गुडादिभ्यष्ठञ् ।
११३ पथ्यतिथिवसतिस्वपतेर्ढञ्
११४ सभायायः ११५ ढश्छन्दसि
११६ समानतीर्थे वासी ।
११७समानोदरेशयित ओ चोदात्तः
११८ सोदराद्यः ११९ भवे छन्दसि
१२० पाथोनदीभ्यांड्यण् ।
१२१ वेशन्तहिमवद्भ्यामण् ।
१२२ स्रोतसो विभाषा ड्यड्ड्यौ
१२३ सगर्भसयूथसनुताद्यन् ।
१२४ तुग्राद् घन् ।
१२५ अग्राद्यत् १२६ घच्छौ च ।
१२७ समुद्राभ्राद्घः ।
१२८ बर्हिषि दत्तम् ।
१२९ दूतस्यभागकर्मणी ।
१३० रक्षोयातूनां हननी ।
१३१ रेवतीजगतीहविष्याभ्यः प्रशस्ये ।
१३२ असुरस्य स्वम् ।
१३३ मायायामण् ।
१३४ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः ।
१३५ अश्विमानण् ।
१३६ वयस्यासु मूर्ध्नो मतुप् ।
१३७ मत्वर्थेमासतन्वोः ।
१३८ लुंगकारेकाररेफाश्च ।
१३९ मधोर्ञ च ।
१४० ओजसोऽहनि यत्खौ ।
१४१ वेशोयशआदेर्भगाद्यल् ।
१४२ ख च १४३ पूर्वैः कृतमिनयौ च
१४४ अद्भिः संस्कृतम् ।
१४५ सहस्रेण संमितौघः ।
१४६ मतौ च १४७ सोममर्हति ।
१४८ मये च १४९ मधोः ।
१५० वसोः समूहे च ।
१५१ छन्दसोऽक्षरसमूहे स्वार्थे ।
१५२ वसुशब्दाच्च ।
१५३ नक्षत्राद् घः ।
१५४ सर्वदेवात्तातिल् ।
१५५ शिवशमरिष्टस्य करे ।
१५६ भावे च

इति चित्राचार्योपनाम्ना मया जगदीशाचार्येण परिष्कृताया माहेश्वराष्टाध्याय्या श्चतुर्थोऽध्यायः समाप्तः



# पञ्चमोऽध्यायः

## प्रथमः पादः

## (५-१)

१ प्राक् क्रीताच्छः ।
२ उगवादिभ्यो यत ।
३ नाभि नभञ्च ।
४ शुनः सम्प्रसारणं वा च दीर्घत्वा न्तोदात्तत्वे ।
५ ऊधसोऽनङ् च ।
६ कम्बलाच्च संज्ञायाम् ।
७ विभाषा हविरपूपादिभ्यः ।
८ अन्नविकारेभ्यश्च ।
९ तस्मैहितम् १० शरीरावयवाद्यत्
११ खलयवमाषतिलवृषब्राह्मणश्च
१२ अजाविभ्यांथ्यन् ।
१३ आत्मन्विश्वजनभोगोत्तरपदात्खः
१४ कर्मधारयादेव ।
१५ पञ्चजनाच्च ।
१६ सर्वजनाट्ठञ् खश्च ।
१७ महाजनान्नित्यं ठञ् ।
१८ भोगोत्तरपदाभ्याम् ।
१९ राजाचार्याभ्यां नित्यम् ।
२० सर्वाण्णो वा ।
२१ पुरुषाद्वधविकारसमूहतेनकृतेषु ढञ् २२ माणवचरकाभ्यां खञ्
२३ तदर्थं विकृतेः प्रकृतौ ।
२४ छदिरुपधिबलेर्ढञ् ।
२५ ऋषभोपानहोर्ञ्यः ।
२५ चर्मणोऽञ् ।
२७ तदस्य तदस्मिन् स्यादिति ।
२८ परिखाया ढञ् ।
२९ प्राग्वतेष्ठञ् ।
३० आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्
३१ असमासे निष्कादिभ्यः ।
३२ शताच्च ठन्यतावशते ।
३३ संख्यायाअतिशदन्तायाः कन् ।
३४ वतोरिड वा ।
३५ विंशति त्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्
३६ कंसार्द्धाभ्यां टिठन् ।
३७ कार्षापणाच्च प्रतिशब्दश्च वादेशः
३८ शूर्पादञान्यतरस्याम् ।
३९ शतमानविंशतिकसहस्रवसनादण्
४० अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम् ।
४१ विभाषा कार्षापणसहस्राभ्यां सुव - र्णशतमानेभ्यश्च ।
४२ द्वित्रिबहुपूर्वान्निष्कात् ।
४३ विस्ताच्च । ४४ विंशतिकात्खः
४५ खार्या ईकन् केवलाच्च ।
४६ काकिण्याः केवलायाश्च ।
४७ पणपादमाषशताद्यत् ।
४८ शाणशताभ्यां बा ।
४९ द्वित्रिबहुपूर्वादण् च ।
५० तेन क्रीतम् ।
५१ तस्य निमित्तं संयोगोत्पातौ ।
५२ पातपित्तश्लेष्मसन्निपातेभ्यः - शमनकोपनयोः ।
५३ गोद्व्यचब्रह्मवर्च्चसोऽसंख्याप - रिमाणाश्वादेर्यत् ।

५४ पुत्राच्छ च ।
५५ सर्वभूमिपृथिवीभ्यामणञौ ।
५६ तस्येश्वरः ।
५७ तत्र विदित इति च ।
५८ लोकसर्वलोकाट्ठञ् ।
५९ तस्य वापः
६० पात्रात्ष्ठन् ।
६१ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयतेऽस्मै ६२ पूरणार्द्धाट्ठन्
६३ भागाद्यच्च ।
६४ तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।
६५ वस्नद्रव्याभ्यां ठन्कनौ ।
६६ संभवत्यवहरति पचति ।
६७ तत्पचतौ द्रोणादण् च ।
६८ आढकाचितपात्रात्खो वा ।
६९ द्विगोष्ठंश्च ।
७० कुलिजाल्लुक्खौ च ।
७१ सोऽस्यांशवस्नभृतयः ।
७२ तदस्य परिमाणम् ।
७३ संख्यायाः संघसूत्राध्ययनेषु संज्ञायां तु स्वार्थे ।
७४ स्तोमे डः ।
७५ शन्शतविंशतीनां डिनिश्छन्दसि
७६ पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।
७७ पञ्चद्दशतौवर्गवर्षयोर्वा ।
७८ सप्तनोऽञ्छन्दसि ।
७९ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ।
८० तदर्हति ८१ छेदादिभ्यो नित्यम्
८२ विराग विरङ्ग च
८३ शीर्षच्छेदाद्यच्च ।
८४ दण्डादिभ्यो यः छन्दसि च
८६ पात्राद् घंश्च ।
८७ कडङ्करदक्षिणाच्छ च ।
८८ स्थालीबिलात् ।
८९ यज्ञर्त्विग्भ्यां तत्कर्मार्हतौ च देशकालयोः घखञौ ।
९० पारायणतुरायणचान्द्रायणं वर्तयति
९१ संशयामापन्नः ।
९२ क्रोशक्रोशशतयोजनयोजनशतानां गच्छत्यभिगमनमर्हत्योः ।
९३ पथः ष्कन् ९४ पन्थो णो नित्यम्
९५ उत्तरवारिजङ्गलाजशङ्कुकान्तारपूर्वपदात्पथेनाहृतञ्च ।
९६ स्थलान्मधुकमरिचयोरण् ।
९७ कालात् ९८ तेन निर्वृत्तम ।
९८ तमधीष्ठो भृतो भूतो भावी ।
९९ मासाद्वयसि यत्खञौ ।
१०० द्विगोर्यप् १०१ षण्मासाण्ण्यच्च
१०२ अवयसि ठं च ।
१०३ समासमयाभ्यां खः ।
१०४ द्विगोर्वा ।
१०५ रात्र्यहस्संवत्सराच्च ।
१०६ वर्षाल्लुक् च ।
१०७ चित्तवति नित्यम् ।
१०८ षष्टिकाः षष्टिरात्रेण पच्यन्ते
१०९ वत्सरान्ताच्छन्दसि ।

११० सम्परिपूर्वात्ख च ।
११२ तेन परिजय्यलभ्यकार्यसुकरम् ।
११३ तदस्य ब्रह्मचर्यम् ।
११४ महानाम्न्यादिभ्यः षष्ठी सम - र्थेभ्यश्च ११५ तच्चरतेति च
११६ अवान्तरदीक्षादिभ्यो डिनिः
११७ अष्टाचत्वरिंशतो ड्वुंश्च ।
११८ चातुर्मास्यानांयलोपश्च ।
११९ चतुर्मासाण्ण्योयज्ञे तत्रभवे ।
१२० संज्ञायामण् ।
१२१ तस्य च दक्षिणायज्ञाख्येभ्यः
१२२ तत्र च दीयते ।
१२३ कार्यं भववत् कालात् ।
१२४ व्युष्टादिभ्योऽण् ।
१२५ तेन यथाकथाचहस्ताभ्या णयतौ
१२६ संपादिनिः ।
१२७ कर्मवेषाद्यत् ।
१२८ तस्मै प्रभवतिसंतापादिभ्यः
१२९ विगृहीताच्चसक्त मासौदनात्
१३० योगाद्यच्च ।
१३१ कर्मण उकञ् ।
१३२ समयस्तदस्य प्राप्तम् ।
१३४ ऋतोरण् ।
१३५ उपवस्त्रादिभ्यश्च ।
१३६ छन्दसिघस् ।
१३७ कालाद्यत् १३८ प्रकृष्टेठञ्
१३९ प्रयोजनम् ।
१४० विशाखाषाडादण् मन्थदण्डयोः
१४१ चूडादिभ्यश्च ।
१४२ अनुप्रवचनादिभ्यश्छः ।
१४३ विशिपूरिपतिरूहितप्रकृतेरना-
त्सपूर्वपदाच्च ।
१४४ स्वार्गादिभ्योयत् ।
१४५ पुण्याहवाचनादिभ्योलुक् ।
१४६ समापनात्सपूर्वपदात् ।
१४७ ऐकागारिकट् चौरे ।
१४८ आकालिकडाद्यन्तवचने ।
१४९ अकालाट्ठंश्च ।
१५० तेन तुल्यं क्रिया चेद्वतिः ।
१५१ तत्र तस्येव ।
१५२ तदर्हम् ।
१५३ उपसर्गाच्छन्दसि धात्वर्थे ।
१५४ तस्य भावस्त्वतलौ ।
१५५ आ च त्वात् ।
१५६ न नञ्पूर्वात्तत्पुरुषादचतुरसं-
गतलवणवटयुधकतरसलसे-
भ्यः ।
१५७ पृथ्वादिभ्य इमनिज्वा ।
१५८ वर्णदृढादिभ्यःष्यञ् च ।
१५९ गुणवचनब्राह्मणादिभ्यः
कर्मणि च ।
१६० चातुर्वर्ण्यादीनां स्वार्थे ।
१६१ अर्हतो नुम् च ।
१६२ सर्वत्रेदादिभ्यः स्वार्थे ।
१६३ चतुर्वेदस्योभयपदवृद्धिश्च ।
१६४ स्तेनात् ।
१६५ यन्नलोपश्च ।
१६६ सखिदूतवणिग्भ्यो यः ।
१६७ कपिज्ञात्योर्ढक् ।
१६८ पत्यन्तपुरोहितादिभ्यो यक्

१६९ राजाऽसे ।
१७० प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।
१७१ सुभगमन्त्रे ।
१७२ हायनान्तयुवादिभ्योऽण् ।
१७३ यलोपश्च श्रोत्रियस्य ।
१७४ पुरुषाऽसे १७५ हृदयाऽसे ।
१७६ इगन्ताच्च लघुपूर्वात् ।
१७७ योपधाद्गुरूपोत्तमाद्वुञ् ।
१७८ सहायाद्वा ।
१७९ द्वन्द्वमनोज्ञादिभ्यश्च ।
१८० गोत्रचरणाच्श्लाघात्याकारतदवेतेषु ।
१८२ होत्राभ्यश्छः ।
१८३ ब्रह्मणस्त्वः ।

इति प्रथमः पादः

## द्वितीयः पादः

## (५—२)

१ धान्यानांभवनेक्षेत्रेखञ् ।
२ व्रीहिशाल्योर्ढक् ।
३ यवयवकषष्टिकाद्यत् ।
४ विभाषातिलमाषोमाभङ्गाणुभ्यः
५ सर्वचर्मणः कृतः खखञौ ।
६ यथामुखसंमुखस्य दर्शनः खः ।
७ तत्सर्वादेःपथ्यङ्गकर्मपत्रपात्रंव्याप्नोति ।
८ अ प्रपद प्राप्नोति ।
९ अनुपदसर्वान्नायानयंवद्धभक्षयतिनेयेषु ।
१० परोवरपरम्परपुत्रपौत्रमनुभवति
११ अत्यन्तानुकामंगामी ।
१२ विमुहीताद्विपरीताच्चावारपारात्
१३ समांसमॉविजायतेपूर्वपदेसुपोऽलुक्
१४ अनुत्पत्तावुत्तरपपदस्य च वा यलोपः १५ अद्यश्वीनावष्टब्धे ।
१६ आगवीनः १७ अनुग्वलंगामी ।
१८ अध्वनो यत्खौ ।
१९ अभ्यमित्राच्छ च ।
२० गोष्ठात्खञ्भूतपूर्वे ।
२१ अश्वस्यैकाहगमः ।
२२ शालीनकौपीनेअधृष्टाकार्ययोः
२३ व्रातेन जीवति ।
२४ साप्तपदीनं सख्यम् ।
२५ हैयंगवीनं संज्ञायाम् ।
२६ तस्य पाकमूलपील्वादिकर्णादिभ्यःकुणब्जाहचौ ।
२७ पक्षात्तिः ।
२८ तेनवित्तश्चुञ्चुप्चणयौ ।
२९ विनञ्भ्यां नानाञौ नसह ।
३० वेः शालच्छङ्कटचौ ।
३१ सम्प्रोदश्च कटच् ।
३२ अलाबूतिलोमाभङ्गाभ्यो रजसि
३३ पशुनाम्मो स्थाने गोष्ठच् ।
३४ संघाते कटच् ।
३५ विस्तारे पटच् ।
३६ द्वित्वे गोयुगच् ।

३७ प्रकृत्यर्थस्यषट्त्वे षड्गवच् ।
३८ विकारे स्नेहने तैलच् ।
३९ इक्ष्वादिभ्यःशाकटशाकिनौ भवने क्षेत्रे ४० अवात्कुटारच्च ।
४१ नते नासिकायाः संज्ञायां टीटञ्नाटज् भ्रटचः ।
४२ नेर्विडज्बिरीसचौ ।
४३ इनच्पिटचकाश्चिकच्चिचिक आदेशाः ।
४४ क्लिन्नस्य चिल्पिल्चुल्लश्चास्य-चक्षुषी ।
४५ उपाधिभ्यां त्यकन्नासन्नारूढयोः ।
४६ कर्मणि घटोऽठच् ।
४७ तदस्य संजातं तारकादिभ्यइलच्
४८ गर्भादप्राणिनि ।
४९ प्रमाणे द्वयसज्दघ्नमात्रचः ।
५० प्रमाणे लुक ५१ द्विगोर्नित्यम्
५२ स्तोमे डट् ।
५३ शन्शतविंशतिभ्यो डिनिः ।
५४ प्रमाणपरिमाणसंख्याभ्यःसंशये-मात्रच् ।
५५ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ-बहुलम् ।
५६ पुरुषहस्तिभ्यामण् च ।
५७ यत्तदेतेभ्यःपरिमाणे वतुप् ।
५८ युष्मदस्मद्भ्यां च छन्दसि सादृश्ये
५९ किमिदंभ्यां वोघश्च ।
६० किमः संख्यापरिमाणे डति च
६१ संख्याया अवयवे तयप् ।
६२ द्वित्रिभ्यां तयस्यायज्वा ।
६३ उभादुदात्तो नित्यम् ।
६४ तदस्मिन्नधिकमितिदशान्ताड्डः
६५ शदन्तविंशतेस्तदन्ताच्च ।
६६ संख्याया गुणस्यनिमाननिमेययो र्मयट्भूयस्त्ववाचिकायाः
६७ तस्य पूरणे डट् ।
६८ नान्तादसंख्यादेर्मट्चागमः ।
६९ छन्दसि थट् च ।
७० षट्कतिकतिपयचतुरां थुक् ।
७१ चतुरश्छयतावाद्यक्षरलोपश्च ।
७२ बहुपूगगणसंघस्य तिथुक् ।
७३ वतोरिथुक् ७४ द्वेस्तीयः ।
७५ त्रेः सम्प्रसारणं च ।
७६ विंशत्यादिभ्यस्तमडन्यतरस्याम्
७७ नित्यंशतादिमासार्द्धमाससंवत्सराच्च ।
७८ षष्ट्यादेश्चासंख्यादेः ।
७९ मतौच्छःसूक्तसाम्नोः ।
८० अध्यायानुवाकयोर्लुक ।
८१ विमुक्तादिभ्योऽण् ।
८२ गोषदादिभ्यो वुन् ।
८३ तत्र कुशलः पथः ।
८४ आकर्षादिभ्यः कन् ।
८५ धनहिरण्यात्कामे ।
८६ स्वाङ्गेभ्यः प्रसिते ।
८७ उदराट्ठगाद्यूने ।
८८ सस्येन परिजातः ।
८९ अंशं हारी ।
९० तन्त्रादचिरापहृते ।
९१ ब्राह्मणकोष्णिके संज्ञायाम् ।

९२ शीतोष्णाभ्यां कारिणि ।
९३ अधिकम् ।
९४ अनुकाभिकाभीकाः कमिता ।
९५ पार्श्वेनान्विच्छति ।
९६ अयः शूलदण्डाजिनाभ्यां ठक्ठञौ
९७ तावतिथं ग्रहणमिति लुग्वा ।
९८ तावतिथेन गृह्णातीकन्पूरणप्रत्य
यस्य च नित्यंलुक् ।
९९ स एषां ग्रामणीः ।
१०० शृङ्खलमस्य बन्धनं करभे
१०१ उत्क उन्मनाः ।
१०२ कालप्रयोजनाद्रोगे ।
१०३ तदस्मिन्नन्नं प्राये संज्ञायाम् ।
१०४ वटकेभ्यइनिः ।
१०५ कुलमाषादञ् ।
१०६ श्रोत्रियँश्छन्दोऽधीते ।
१०७ श्राद्धमनेन भुक्तमिनिठनौ ।
१०८ पूर्वादिनिः १०९ सपूर्वाच्च ।
११० इष्टादिभ्यश्च ।
१११ छन्दसि परिपन्थिपरिपरिणौ-
पर्यवस्थातरि ।
११२ अनुपद्यन्वेष्टा ।
११३ साक्षाद् द्रष्टरि संज्ञायाम् ।
११४ क्षेत्रियच् परक्षेत्रे चिकित्स्यः
११५इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृ-
ष्टमिन्द्रजुष्टमिन्द्रदत्तमितिवा
११६ तदस्यास्त्यस्मिन्निति मतुप् ।
११७ गुणवचनेभ्यो लुक् ।
११८ रसादिभ्यश्च ।
११९ प्राणस्थादातो लज्वा ।
१२० सिध्मादिभ्य च ।
१२१ पार्ष्णिधमन्योदीर्घश्च ।
१२२ वातदन्तवलललाटगलानांकू-
नङ् च ।
१२३ जटाघटाकालाः क्षेपे ।
१२४ क्षुद्रजन्तूपतापाच्च ।
१२५ वत्सांसाभ्यां कामबले ।
१२६ फेनादिलच्च ।
१२७ लोमादिपामादिपिच्छादिभ्य
शनेलचः ।
१२८ अङ्गात्कल्याण ।
१२९ शाकीपलालीदद्रुवां ह्रस्वत्वं
१३० विष्वजो लोपः ।
१३१ लक्ष्म्या अच्च
१३२ जटाघटाकालात्क्षेपे ।
१३३ प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ।
१३४ तपःसहस्राभ्यां विनीनो ।
१३५ अण् च ।
१३६ ज्योत्स्नादिभ्यश्च ।
१३७ सिकताशर्कराभ्याञ्च ।
१३८ देशे लुबिलचौ च ।
१३९ दन्त उन्नत उरच् ।
१४० ऊषसुषिमुष्कमधुखमुखकुञ्ज
नगपांसुपाण्डुभ्योरः ।
१४१ कच्छ्वा ह्रस्वत्वं च ।
१४२ द्युद्रुभ्यां मः ।
१४३ केशाद्वोऽन्यतरस्याम् ।
१४४ अन्येभ्योऽपि दृश्यते ।

१४५ अर्णसो लोपश्च ।
१४६ छन्दसीवनिपौ च ।
१४७ मेधारथाभ्यामिरन्निरचौ ।
१४८ गाण्डीगाण्ड्यजगात्संज्ञायाम् ।
१४९ काण्डाण्डादीरन्नीरचौ ।
१५० रजःकृष्यासुतिपरिषदो वलच्
१५१ अन्येभ्योऽपि
१५२ दन्तशिखात्संज्ञायाम् ।
१५३ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः
१५४ अत इनिठनौ ।
१५५ व्रीह्यादिभ्यश्च ।
१५६ शीर्षान्नञः ।
१५७ तुन्दादिभ्यः स्वाङ्गाद्विवृद्धौ-चेलच्च ।
१५८ एकगोपूर्वाट्ठञ्नित्यम् ।
१५९ शतसहस्रान्ताच्च निष्कात् ।
१६० रूपादाहतप्रशंसयोर्यप् ।
१६१ अन्येभ्योऽपि दृश्यते ।
१६२ शिखादिभ्य इनिः ।
१६३ यवखदादिभ्य इकन् ।
१६४ शेषेभ्य उभयप् ।
१६५ अस्मायामेधास्रजो विनिः ।
१६६ बहुलं छन्दसि ।
१६७ अष्ट्रामेखलयाश्च,
द्वयोभयहृदयानां दीर्घत्वञ्च ।
१६८ मर्मणश्च १६९ आमस्य सर्वत्र
१७० शृङ्गवृन्दाभ्यामारकन् ।
१७१ फलबर्हाभ्यामिनच् ।
१७२ हृदयाच्चालुर्वा ।
१७३ शीतोष्णतृप्रेभ्यस्तन्नसहत इत्यालुच् १७४ हिमाच्चेलुः ।
१७५ बलाच्चोलच् ।
१७६ वातात्समूहे च ।
१७७ पर्वमरुद्भ्यां तप् ।
१७८ अर्थात्तदभावे इनिः ।
१७९ ऊर्णाया युस् ।
१८० वाचोग्मिनिः ।
१८१ आलजाटचौ बहुभाषिणिकुत्सि
१८२ स्वामिन्यैश्वर्ये १८३ अर्शआदिभ्योऽच् ।
१८४ स्वाङ्गाद्धीनात् । १८५ वर्णात्
१८६ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिरनङ्गात् ।
१८७ वातातिसारपिशाचेभ्यःकुक् च रोगे ।
१८८ वयसि पूरणात् ।
१८९ सुखादिभ्यश्च १९० मालाक्षे
१९१ धर्मशीलवर्णान्ताच्च ।
१९२ हस्ताज्जातौ ।
१९३ वर्णाद्ब्रह्मचारिणि ।
१९४ पुष्करादिभ्यो देशे ।
१९५ बलाद् बाहूरुपूर्वात् ।
१९६ सर्वादेश्च ।
१९७ अर्थतदन्तेभ्यश्चासन्निहिते ।
१९८ बलादिभ्यो मतुबन्यतरस्याम्
१९९ संज्ञायां मन्माभ्याम् ।
२०० कंशंभ्यां बभयुस्तितुतयसः ।
२०१ तुन्दिवलिवटेर्भः
२०२ अहंशुभमोर्युस् ।

★ इति द्वितीयः पादः ★

## तृतीयः पादः

(५—३)

१ प्रागदिशो विभक्तिः ।
२ किंसर्वनामसंख्यार्थकबहुभ्योऽ-
द्वयादिभ्यः ।
३ इदम इश् ४ एततौ रथोः ।
५ एतदः ६ अश् ७ थमुश्च ।
८ सर्वस्य सोऽन्यतरस्यां दि ।
९ पञ्चम्यास्तसिल ।
१० तसेश्च । ११ पर्यभिभ्याञ्च
१२ सप्तम्यास्त्रल १३ इदमो हः
१४ किमोऽत् १५ वा ह्र च छन्दसि
१६ इतराभ्योऽपि दृश्यन्ते ।
१७ सर्वैकान्यकियत्तदः काले दा ।
१८ इदमो र्हिल् १९ अधुना ।
२० दानीं च २१ तदश्च ।
२२ तयोर्दार्हिलौ च छन्दसि ।
२३ अनद्यतने र्हिलन्यतरस्याम् ।
२४ सद्यःपरुत्परार्यैषमः परेद्यव्यद्य-
पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युर-
परेद्युरधरेद्युरुभयेद्युरुभयद्युरुत्तरेद्युः
२५ प्रकारवचने थाल् ।
२६ इदमस्थमुः २६ किमश्च ।
२७ था हेतौ चच्छन्दसि ।
२८ दिक्शब्देभ्यः सप्तमीपञ्चमी -
प्रथमाभ्यो दिग्देशकालेष्वस्ताति:
२९ दक्षिणोत्तराभ्यामतसुच् ।
३० विभाषा परावराभ्याम् ।
३१ अञ्चेर्लुक् ३२ उपर्युपरिष्टात्
३३ उपरश्चोक्ते ३४ पश्चात् ।
३५ दिक्पूर्वपदाच्च ।
३६ अर्द्धोत्तरपदस्य च पश्च ।
३७ पूर्वपदेन विनापि ।
३८ पश्च पश्चा चच्छन्दसि ।
३९ उत्तराधरदक्षिणादातिः ।
४० एनबन्यतरस्यामदूरेऽपञ्चम्याः
४१ दिक्शब्दमात्राच्च ।
४२ दक्षिणादाच् ४३ आहि च दूरे
४४ उत्तराच्च ।
४५ पूर्वाधरावराणामसिः पुरधवश्-
चैषाम् । ४६ अस्ताति च ।
४७ विभाषाऽवरस्य ।
४८ संख्याया विधार्थे धा ।
४९ अधिकरणविचाले च वा ।
५० एकाद्धो ध्यमुञ् वा ।
५१ द्वित्र्योर्धमुञ् च वा ।
५२ धमुञान्ताड्डश्च ।
५३ एधाच्च । ५४ याप्ये पाशम् ।
५५ पूरणाद्भागे तीयादन् ।
५६ प्रागेकादशभ्योऽछन्दसि ।
५७ षष्ठाष्टमाभ्यां ञ च ।
५८ मानपश्वङ्गयोः कन्लुकौ च ।
५९ एकादाकिनिच्चासहाये ।
६० भूतपूर्वे चरट् ।
६१ षष्ठ्या रूप्य च ।
६२ अतिशायने तमबिष्ठनौ ।
६३ तिङश्च ।
६४ द्विवचनविभज्योपपदे तरबीयसुनौ
६५ अजादी गुणवचनादेव ।
६६ तुश्छन्दसि ६७ प्रशस्य श्रः ।

६८ ज्य च ६९ वृद्धस्य च ।
७० अन्तिकाबाढयोर्नेदसाधौ ।
७१ युवाल्पयोः कन्वा ।
७२ विन्मतोर्लुक् ७३ प्रशंसायां रूपम्
७४ ईषदसमाप्तौ कल्पदेश्यदेशीयरः
७५ विभाषा सुपो वहुच् पुरस्तात्तु
७५ प्रकारवचने जातीयर् ।
७७ प्रागिवात्कः ।
७८ अव्ययसर्वनाम्नामकच्प्राक्टेः ।
७९ तूष्णीमः काम् ।
८० शीले को मलोपश्च ।
८१ कस्य च दः ८2 अज्ञाते ।
८३ कुत्सिते ८४ संज्ञायां कन् ।
८५ अनुकम्पायाम् ।
८६ नीतौ च तद्युक्तात् ।
८७ वह्वचो मनुष्यनाम्नष्ठज्वा ।
८८ घनिलचौ च ।
८९ प्राचामुपादेरडज्वुचौ च ।
९० जातिनाम्नः कन् ।
९१ अजिनान्तस्योत्तरपदलोपश्च ।
९२ठाजादावूर्ध्वं द्वितीयाच्चतुर्थाच्चाचः
९३ अनजादौ विभाषा ।
९४ ठाजादावनजादौ च विभाषा पूर्वपदस्य ।
९५ विनापिप्रत्ययेन पूर्वोत्तरपदयोर्वा
९६ उवर्णाल्ल इलस्य च ।
९७ ऋृवर्णान्ताच्चस्वार्थे ।
९८ सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपः
९९ एकाक्षरपूर्वपदानामुत्तरपदलोपश्च
१०० शेवलसपरिविशालवरुणार्यमादीनां तृतीयादक्तसन्धीनाम्
१०१ अल्पे १०२ ह्रस्वे ।
१०३ संज्ञायां कन् ।
१०४ कुटीशमीशुण्डाभ्यां रः ।
१०५ कुत्वा डपच् ।
१०६ कासूगोणीभ्यां ष्टरच् ।
१०७ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।
१०८ किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ।
१०९ वा बहूनां जातिपरिप्रश्ने डतमच
११० एकाच्च प्राचाम् ।
१११ अवक्षेपणे कन् ।
११२ इवे प्रकृतौ ११३ संज्ञायाञ्च
११४ लुम्मनुष्ये ।
११५ जीविकार्थे चापण्ये ।
११६ देवपथादिभ्यश्च ।
११७ वस्तेर्ढञ् ११८ शिलाया ढः
११९ शाखादिभ्यो यत् ।
१२० द्रव्यं च भव्ये ।
१२१ कुशाग्राच्छः ।
१२२ समासाच्च तद्विषयात् ।
१२३ शर्करादिभ्योऽण् ।
१२४ अंगुल्यादिभ्यः ष्ठक् ।
१२५ एकशालायास्ठजन्यतरस्याम्
१२६ कर्क्कलोहितादीकक् ।
१२७ प्रत्नपूर्वविश्वेमात्थाल् छन्दसि
१२८ पूगाञ्ञ्योऽग्रामणीपूर्वात् ।
१२९ व्रातचफञोरस्त्रियाम् ।
१३० आयुधजीविसंघाञ्ञ्यड् बाहीकेष्वब्राह्मणराजन्यात् ।

१३१ वृकाट टेण्यण् ।
१३२ दामन्यादित्रिगर्तषष्ठाच्छः ।
१३३ पर्श्वादियौधेयादिभ्यामणञौ
१३४ अभिजिद्विदभृच्छालावच्छि-
खावच्छमीवदूर्णावच्छ्रुमदणो -
गोत्रीयाद् यञ् ।
१३५ ञ्यादयस्तद्राजाः ।

□ इति तृतीयः पादः □

## चतुर्थः पादः

## [५—४]

१ पादशतस्य संख्यादेर्वीप्सायां
वुन् लोपश्च ।
२ दण्डव्यवसर्गयोश्च ।
३ स्थूलादिचञ्चञ्चद्बृहद्भ्यः
प्रकारवचने कन्
४ इक्षुतिलपाद्यकालावदाताः सुरा-
याम् ५ गोमूत्र आच्छादने ।
६ सुराया अहौ ।
७ जीर्णः शालिषु ।
८ पत्रमूले समस्तव्यस्ते ।
९ अनत्यन्तगतौ क्तादसामिवचने
१० वृहत्या आच्छादने ।
११ अषडक्षाशितंग्वलंकर्मालंपुरु -
षाध्युत्तरपदात्खः ।
१२ विभाषाञ्चेरदिक् स्त्रियाम् ।
१३ जात्यन्ताच्छो वन्धुनि ।
१४ स्थानान्ताद्विभाषा सस्थानेनेति-
चेत् । १५ किमेत्तिङव्ययघा -
दाम्वद्रव्यप्रकर्षे ।
१६ अमु च च्छन्दसि ।
१७ अनुगादिनष्ठक् ।
१८ णचः स्त्रियामञ् ।
१९ अणिनुणः २० विसारिणो मत्स्ये
२१ संख्यायाः क्रियाभ्यावृत्तिगणने
कृत्वसुच् ।
२२ द्वित्रिचतुर्भ्यः सुच् ।
२३ एकस्य सकृच्च ।
२४ विभाषा बहोर्धाऽविकृष्टकाले ।
२५ तत्प्रकृत वचने मयट् ।
२६ समूहवच्च बहुषु ।
२७ अनन्तावसथेतिहभेषजाञ्ञ्यः ।
२८ देवतान्तात्तादर्थ्ये यत् ।
२९ पादार्घामुष्यायणामुष्यपुत्रिकेभ्यश्च
३० समादावतुः ।
३१ नवस्य नू तस्मात्त्नप्तनखाः ।
३२ नश्च पुराणे प्रात् ।
३३ भागरूपनामभ्यो धेयः ।
३४ छन्दसि मित्रात् ।
३५ आग्नीध्रसाधारणादञ् ।
३६ अयवसमरुद्भ्यां छन्दसि ।
३७ अतिथेर्ञ्यः ३८ देवात्तल् ।
३९ अवेः कः ४० यावादिभ्यः कन्
४१ अृतावुष्णशीते ।
४२ पशौ लूनवियाते ।
४३ अणु निपुणे । ४४ पुत्र कृत्रिमे
४५ स्नातवेदसमाप्तौ ।

४६ शून्य रिक्ते ४७ दानकुत्सिते ।
४८ तनु सूत्रे ४९ ईयसश्च ।
५० कुमरी क्रीडानकावि च ।
५१ लोहितान्मणौ ।
५२ वर्णे चानित्ये वा च लिङ्गबाधनम्
५३ रक्ते ५४ कालाच्च ५५ विनया-
दिभ्यष्ठक् ५६ उपापाद्ध्रस्वत्वं च ।
५७ वाचो व्याहृतार्थायाम् ।
५८ तद्युक्तात्कर्मणोऽण् ।
५९ छन्दसि कुलालवरुडनिषाद -
कर्मारचण्डालमित्रामित्रेभ्यश्च
६० सान्नाय्यादयः सर्वत्र ।
६१ ओषधेरजातौ ।
६२ प्रज्ञादिश्य च ६३ श्रोत्र शारीरे
६४ जुत्वत् कृष्णमृगे ।
६५ मृदस्तिकन् ।
६६ सस्नौ प्रशंसायाम् ।
६७ वृकज्येष्ठाभ्यां तिलतातिलौ-
च छन्दसि ।
६८ बह्वल्पार्थाच्छस्कारकादन्यतर-
स्यां मंगलामंगलयाः ।
६९ संख्यैकवचनाच्चवीप्सायाम् ।
७० प्रतियोगे पञ्चम्या आद्यादि-
भ्यश्च तसिः ।
७१ अपादाने चाहीयरुहोः ।
७२ अतिग्रहाव्यथनक्षेपेष्वकर्तरि-
तृतीयायाः ।
७३ हीयमानपापयोगाच्च ।
७४ षष्ठ्या व्याश्रये ।
७५ रोगाच्चापनयने ।
७६ अभूततद्भावे कृभ्वास्तियोगे सं-
पद्यकर्तरि च्विः ।
७७ अरुर्मनश्चक्षुश्चेतोरहोरजसां
लोपश्च ।
७८ विभाषा सातिकात्स्र्न्ये ।
७९ अभिविधौ संपदा च ।
८० तदधीनवचने ८१ देये त्रा च
८२ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वि-
तीयासप्तम्योर्बहुलम् ।
८३ अव्यक्तानुकरणाद्व्यजवरार्द्धा-
दनितौ डाच् ।
८४ कृञो द्वितीयतृतीयशम्बबीजा-
त्कृषौ ८५संख्यायाश्च गुणान्तायाः
८६ समयाच्च यापनायाम् ।
८७ सपत्रनिष्पत्त्रादतिव्यथने ।
८८ निष्कुलान्निष्कोषणे ।
८९ सुखप्रियादानुलोम्ये ।
९० दुःखात्प्रातिलोम्ये ।
९१ शूलात्पाके ९२ सत्यादशपथे ।
९३ मद्रभद्राभ्यां परिवापणे ।
९४ समासान्ताः । ९५ न पूजना-
त्स्वतौ प्राग्बहुव्रीहेश्च ।
९६ किमः क्षेपे ९७ नञस्तत्पुरुषात्
९८ पथो विभाषा ।
९९ बहुव्रीहितत्पुरुषयोः संख्येये ड-
जबहुगणात्
१०० ऋक्पूरब्धूःपथामानाक्षे ।
१०१ अच् ।
१०२ प्रत्यन्ववपूर्वात्सामलोम्नः ।
१०३ कृष्णोदक्पाण्डुसंख्यापूर्वायाः भूमेश्च

१०३ अक्ष्णोऽदर्शनात् ।

१०४ अचतुरविचतुरसुचतुरोपच - तुरविचतुरस्त्रीपुंसधन्वनडुहर्क्साकवाङ्मनसाऽक्षिभ्रुवदारगवोर्वष्ठीपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिश्श्रेयसपुरुषा - युषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुन-गोष्ठश्वाः

१०५ ब्रह्महस्तिपल्यराजभ्यो-वर्चसः ।

१०६ अवसमन्धेभ्यस्तमसः ।

१०७ श्वसो वसीयः श्रेयसः ।

१०८ अन्ववतप्ताद्रहसः ।

१०९ प्रतेरुरसःसप्तमीस्थात् ।

११० अनुगवमायामे ।

१११ द्विस्तावा त्रिस्तावा वेदिः ।

११२ उपसर्गादध्वनः ।

११३ तत्पुरुषस्यांगुलेः संख्याऽव्ययादेः

११४ अहःसर्वैकदेशसंख्यातपुण्या - च्च रात्रेः ।

११५ अह्नोऽह्न एतेभ्यः ।

११६ न संख्यादेः समाहारे ।

११७ पुण्योत्तमैकेभ्यश्च ।

११८ राजाहस्सखिभ्यष्टच् ।

११९ गोरतद्धितलुकि ।

१२० अग्राख्यायामुरसः ।

१२१ अनोश्मायस्सरसां जातिसंज्ञयोः

१२२ ग्रामकौटाभ्यां च तक्ष्णः ।

१२३ अतेः शुनः ।

१२४ उपमानादप्राणिषु ।

१२५ उत्तरमृगपूर्वाच्चसक्थ्नः ।

१२६ नावो द्विगोः १२६ अर्द्धाच्च ।

१२७ खार्याः प्राचाम् ।

१२८ द्वित्रिभ्यामञ्जलेः ।

१२९ अनसन्तान्नपुंसकाच्छन्दसि वा ।

१३० ब्रह्मणो जानपदाख्यायाम् ।

१३१ कुमहद्भ्यामन्यतरस्याम् ।

१३२ द्वन्द्वाच्चुदषहान्तात्समाहारे ।

१३३ अव्ययीभावे शरत्प्रभृतिभ्यः ।

१३४ जराया जरश्च ।

१३५ प्रतिपरसमनुभ्योऽक्षिपथोः ।

१३६ अनश्च ः

१३७ नपुंसकादन्यतरस्याम् ।

१३८ नदीपौर्णमास्याग्रहायणीभ्यः ।

१३९ झयः १४० गिरेश्च सेनकस्य ।

१४१ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । १४२ अङ्गुलेर्दारुणि ।

१४३ द्वित्रिभ्यां ष मूर्ध्नः ।

१४४ अप्प्रधानपूरणीप्रमाण्योः ।

१४५ नेतुर्नक्षत्रे सर्वत्र ।

१४६ मासाद्भृतिप्रत्ययपूर्वपदाट्ठच् ।

१४७ अन्तर्बहिर्भ्याञ्च लोम्नः ।

१४८ अञ् नासिकायाः संज्ञायां नसं चास्थूलात् ।

१४९ खुरखराभ्यां नस् च ।

१५० अर्चाहिशितिभ्योऽपि निगमे ।

१५१ उपसर्गाच्च । १५२ वेर्ग्रश्च ।

१५३ सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ।

१५७ नञ्दुःसुभ्योहलिशक्तिसक्थ्यो-
रन्यतरस्याम् ।
१५८ नित्यमसिच्प्रजामेधयोः ।
१५९ बहुप्रजाश्छन्दसि ।
१६० धर्मादनिच्केवलात ।
१६१ जम्भा सुहरिततृणसोमेभ्यः ।
१६२ दक्षिणेर्मा लुब्धयोगे ।
१६३ इच कर्मव्यतिहारे ।
१६४ द्विदण्डादिभ्यश्च ।
१६५ प्रसम्भ्यां जानुनोर्ज्ञुः ।
१६६ ऊर्ध्वाद्विभाषा ।
१६७ ऊधसोऽनङ् । १६८ धनुषश्च
१६९ वा संज्ञायाम् ।
१७० जायाया निङ् ।
१७१ गन्धस्येदुत्पूतिसुसुरभिभ्यस्त-
देकान्तस्य ।
१७२ अल्पाख्यायाम् ।
१७३ उपमानाच्च ।
१७४ पादस्य लोपोऽहस्त्यादिभ्य ।
१७५ कुम्भपदीषुच ।
१७६ संख्यासुपूर्वस्य ।
१७७ वयसि दन्तस्य दतृ ।
१७८ छन्दसि च ।
१७९ स्त्रियां संज्ञायाम् ।
१८० विभाषा श्यावारोकाभ्याम् ।
१८१ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च
१८२ ककुदस्यावस्थायां लोपः ।
१८३ त्रिककुत् पर्वते ।
१८४ उद्विभ्यां काकुदस्य ।
१८५ पूर्णाद्विभाषा ।
१८६ सुहृद्दुर्हृदौ मित्रामित्रयोः ।
१८७ उरःप्रभृतिभ्यः कप् ।
१८८ अर्थान्नञः ।
१८९ इनः स्त्रियाम् ।
१९० नञृतश्च १९१ शेषाद्विभाषा ।
१९२ न संज्ञायाम् ।
१९३ ईयसश्च । १९४ वन्दिते भ्रातुः
१९५ ऋतश्छन्दसि ।
१९६ नाडीतन्त्र्योः स्वाङ्गे ।
१९७ निष्प्रवाणिश्च ।

इति चित्राचार्योपनाम्ना मया जागदीशाचार्येण चित्रर्षिणा
प्रतिसंस्कृताया माहेश्वराष्टाध्याय्याः
पूर्वार्द्धः समासकृदन्ततद्धितात्मकः
प्रातिपदिकनिर्वृत्तिप्रकरणान्तः
पञ्चमोऽध्यायः समाप्तः



# षष्ठोऽध्यायः

## प्रथमः पादः

(६—१)

१ एकाचो द्वे प्रथमस्य ।
२ अजादेर्द्वितीयस्य ।
३ न न्द्राः संयोगादयः ।
४ यपररेफस्य द्वे ।
५ ईर्ष्यतेस्तृतीयस्य ।
६ तृतीयस्यचैकाचोऽपरे ।
७ कण्ड्वादीनां च ।
८ नामधातूनां वा तृतीयस्यैकादौ ।
९ यथेष्टं नामधातुष्वित्यपरे ।
१० पूर्वोऽभ्यासः ।
११ उभे अभ्यस्तम् ।
१२ जक्षित्यादयः षट् ।
१३ तुजादीनां दीर्घोऽभ्यासस्य ।
१४ लिटि धातोरनभ्यासस्य ।
१५ छन्दसि वा   १७ सन्यङोः ।
१८ श्लौ ।   १९ चङि ।
२० दाश्वान्साह्वान्मीढ्वांश्च ।
२१ कृञादीनां के ।
२२ चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य ।
२३ हन्तेर्घत्वञ्च ।
२४ पाटेर्णिलुगोक्चदीर्घश्चाभ्यासस्य
२५ ष्यङःसम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । २६ बन्धुनि बहुव्रीहौ
२७ मातच्मातृकमातृषु ।
२८ वचिस्वपियजादीनां किति च ।
२९ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च
३० षत्वस्वरप्रत्ययविधीड्विधिषु निष्ठादेशः सिद्धः ।
३१ लिट्यभ्यासस्योभयेषाम् ।
३२ स्वापेश्चङि ।
३३ स्वपिस्यमिव्येञां यङि ।
३४ न वशः   ३५ चायः की ।
३६ स्फायः स्फी निष्ठायाम् ।
३७ स्त्यः प्रपूर्वस्य ।
३८ द्रवमूर्तिस्पर्शयोः श्यः ।
३९ प्रतेश्च ।
४० विभाषाऽभ्यवपूर्वस्य ४१ शृतं पाके
४२ प्यायः पी । ४३ लिड्यङोश्च ।
४४ विभाषा श्वेः ।
४५ णौ च संश्चङोः ।
४६ ह्वः सम्प्रसारणम् ।
४७ अभ्यस्तस्य च ४८ बहुलं छन्दसि
४९ चायः की ।
५० अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः
५१ न सम्प्रसारणे सम्प्रसारणम् ।
५२ ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि
५३ रयेर्मतौ बहुलम् ।
५४ लिटिवयो यः ।
५५ वश्चास्यान्यतरस्यां किति ।
५६ वेञः   ५७ ल्यपि च ५८ ज्यश्च
५९ व्यश्च ।   ६० विभाषा परेः ।
६१ आदेच उपदेशेऽशिति ।
६२ न व्यो लिटि ।

६३ स्फुरतिस्फुलत्योर्घञि ।
६४ क्रीङ्जीनां णौ ।
६५ सिध्यतेरपारलौकिके ।
६६ मीनातिमिनोतिदीङां ल्यपि च
६७ विभाषा लीयते रनिमीमिलि-
यां खलचोः ।
६८ खिदेश्छन्दसि ६९ अपगुरो णमुलि
७१ चिस्फुरोर्णौ ७२ प्रजने वीयतेः
७३ बिभेतेर्हेतुभये ७४ नित्यं स्मयतेः
७५ सृजिदृशोर्झल्यमकिति ।
७६ अनुदात्तस्य चर्दुपधस्य वा ।
७७ शीर्षंश्छन्दसि ७८ ये च तद्धिते
७९ केशेषु वा । ८० अचि शीर्षः
८१ पद्दन्नोमास्हृन्निशसन्यूषन्दोष-
न्दोषन्यकञ्छकन्नुदन्नासञ्मांस्पृ-
त्स्नुवश्छस्प्रभृतिषु सर्वत्र ।
८२ नासिकाया नसयत्तस्क्षुद्रेषु ।
८३ यति वर्णनगरयोर्न ।
८४ धात्वादेः षः सः ।
८५ सुब्धातुष्ठिवुष्वष्कतीनां न ।
८६ णो नः । ८७ लोपोव्योर्वलि ।
८८ वेरपृक्तस्य ।
८९ हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं
हल् । ९० एङ्ह्रस्वात्सम्बुद्धेः
९१ शेश्छन्दसि बहुलम् ।
९१ ह्रस्वस्य पिति कृति तुक् ।
९२ संहितायाम् ९३ छे च ।
९४ आङ्माङोश्च ९५ दीर्घात्
९५ पदान्ता द्वा ।
९७ विश्वजनादीनां छन्दसि च ।
९८ इको यणचि ९९ प्लुतपूर्वस्य च
१०० एचोऽयवायावः ।
१०२ वान्तो यि प्रत्यये ।
१०३ छन्दसि गोर्यूतौ ।
१०४ अध्वपरिमाणे च ।
१०५ धातोस्तन्निमित्तस्यैव ।
१०० क्षय्यजय्यौ शक्यार्थे ।
१०७ क्रय्यस्तदर्थे ।
१०८ भय्यप्रवय्ये च छन्दसि ।
१०९ हृदय्या अप्सु ।
११० एकः पूर्वपरयोः ।
१ १ अन्तादिवच्च ।
११२ षत्वतुकोरसिद्धोऽसंप्रसारणङोट्सु
११३ आद्गुणः ११४ वृद्धिरेचि ।
११५ एत्येधत्यूठ्सु ।
१ ६ अक्षादूहिन्याम् ।
११७ स्वादीरेरिण्योः ।
११८ प्रादूढोढयेषैष्येषु
११९ ऋते च तृतीयासमासेऽवर्णात्
१२० प्रवत्सतरकम्बलवसनानामृणे
१२१ ऋणदशाभ्याञ्च ।
१२२ आटश्च ।
१२३ उपसर्गादृति धातौ ।
१२४ वा सुप्यापिशलेः ।
१२५ औतोऽम्शसो १२६ एङि पररूपम्
१२७ शकन्ध्वादिषु च ।
१२८ सीमन्तः केशेषु ।
१२९ एवे चानियोगे ।
१३० एमन्नादिषु चछन्दसि ।
१३१ ओत्वोष्ठयोर्वा समासे ।

१३२ ओमाङोश्च ।
१३३ उस्यपदान्तात् १३४ अतो गुणे
१३५ अव्यक्तानुकरणस्यानेकाजत इतौ
१३६ नाम्रेडितस्यान्त्यस्य तु वा ।
१३७ नित्यमाम्रेडिते डाचि ।
१३८ अकोऽकि दीर्घः ।
१३९ उरलि च पर्यायेण ।
१४० प्रथमयोः पूर्वसवर्णः ।
१४१ तस्माच्छसो नः पुंसि ।
१४२ नादिचि १४३ दीर्घाज्जसि च
१४४ वा छन्दसि १४५ अमिपूर्वः ।
१४६ सम्प्रसारणाच्च ।
१४७ एङः पदान्तादति ।
१४८ ङसिङसोश्च १४९ ऋत उत्
१५० ख्यत्यात्परस्य ।
१५१ अतो रोरप्लुतादप्लुते ।
१५२ हशि च ।
१५३ प्रकृत्यान्तःपादमव्यपरे ।
१५४ अव्यादवद्यादवक्रमुरव्रताय -
मवन्त्ववस्युषु व्यपरेऽपि ।
१५५ यजुष्युरः ।
१५६ आपो जुषाणोवृष्णोवर्षिष्ठेऽ -
म्बेऽम्बालेऽम्बिकेपूर्वे ।
१५७ अङ्ग इत्यादौ च ।
१५८ अनुदात्ते च कुधपरे ।
१५९ अवपथासि च ।
१६० सर्वत्र विभाषा गोः ।
१६१ अवङ् स्फोटायनस्य ।
१६२ नित्यमिन्द्रे
१६३ प्लुतप्रगृह्या अचि
१६४ आङो ऽनुनासिकश्छन्दसि
१६५ इकोऽसवर्णे शाकल्यस्य ह्रस्व-
श्चाऽसिन्नित्यसमास गोः ।
१६६ ईषा अक्षादिषु च्छन्दसि प्रकृत्या
१६७ ऋत्यकः
१६८ अप्लुतवदुपस्थिते
१६९ ई३ चाक्रवर्मणस्य ।
१७० दिव उत् ।
१७१ एतत्तदोःसुलोपोऽकोरनञ्स -
मासे हलि ।
१ २ स्यश्छन्दसि बहुलम् ।
१७३ सोऽचि लोपे चेत्पादपूरणम् ।
१७४ सुट कात्पूर्वः ।
१७५ अडभ्यासव्यवायेऽपि ।
१७६ संपर्युपेभ्यः करोतौ भूषणे ।
१७७ समवाये च ।
१७८ उपात्प्रतियत्नवैकृतवाक्याध -
याहारेषु च ।
१७९ किरतौ लवने णमुल्च ।
१८० हिंसायां प्रतेश्च ।
१८१ अपाच्चतुष्पाच्छकुनिष्वालेख-
नेहर्षजीविकाकुलायकरणेष्वे -
वात्मनेपदञ्च ।
१८२ कुस्तुम्बुरूणि जातिः ।
१८३ अपरस्पराः क्रियासातत्ये
१८४ गोष्पदं सेवितासेवितप्रमाणेषु
१८५ आस्पदं प्रतिष्ठायाम् ।
१८६ आश्चर्यमनित्ये ।
१८७ वर्चस्केऽवस्करः ।
१८८ अपस्करो रथाङ्गम् ।

१८९ विष्किरः शकुनिर्विकारो वा
१९० ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ।
१९१ प्रतिष्कशश्च कशेः ।
१९२ प्रस्कण्वहरिश्चन्द्रावृषी ।
१९३ मस्करमस्करिणौ वेणुपरिव्रा-
जकयोः ।
१९४ कास्तीराजस्तुन्दे नगरे ।
१९५ कारस्करो वृक्षः ।
१९६ पारस्करप्रभृतीनि च संज्ञायाम्
१९७ तद्बृहतोः करपत्योश्चोरदेवतयोः
सुट् तलोपश्च ।
१९८ प्रात्तुम्पतौ गवि कर्तरि ।
१९९ अनुदात्तं पदमेकवर्जम् ।
२०० सतिशिष्टस्वरो बलीयानन्यत्र
विकरणस्वरेभ्यः ।
२०१ विभक्तिनिमित्तस्वराच्च स्व-
रो बलीयान् ।
२०२ कर्षात्वतो घञोऽन्तउदात्तः ।
२०३ उञ्छादीनाञ्च ।
२०४ गरो दूष्येऽखन्तः ।
२०५ वेगवेदचेष्टबन्धाः करणे ।
२०६ स्तुयुद्रुवश्छन्दसि ।
२०७ वर्तनिः स्तोत्रे २०८ श्वभ्रेदरः
२०९ साम्बतापौ गर्हायाम् ।
२१० उत्तमशश्वत्तमौ ।
२११ भक्षमन्यभागदेहा घञन्ताः ।
२१२ अनुदात्तस्य च यत्रोदात्तलोपः
२१३ धातोः २१४ सप्रत्ययेश्चितः ।
२१५ तद्धितस्य २१६ कितः ।
२१७ तिसृभ्यो जसः ।
२१८ चतुरः शसि ।
२१९ सावेकाचस्तृतीयादिर्विभक्तिः
२२० अन्तोदात्तादुत्तरपदादन्यतर-
स्यामनित्यसमासे ।
२२१ अञ्चेश्छन्दस्यसर्वनामस्थानम्
२२२ सोपध्यूडिदम्पदाद्यप्पुम्रैद्युभ्यः
२२३ अष्टनो दीर्घात् ।
२२४ शतुरनुमो नद्यजादी ।
२२५ बृहन्महतोश्च ।
२२६ उदात्तयणो नाचच हल्पूर्वात्
२२७ नोङ् धात्वोः ।
२२८ ह्रस्वनुड्भ्यो मतुबन्तः ।
२२९ नामन्यतरस्याम् ।
२३० ङ्याश्छन्दसि बहुलम् ।
२३१ षट्त्रिचतुर्भ्यो हलादिः ।
२३२ झल्युपोत्तमम् ।
२३३ विभाषा भाषायाम् ।
२३४ न गोश्वन्साववर्णराडङ् क्रुङ्-
कृद्भ्यः २३५ दिवो झल् ।
२३६ नृ चान्यतरस्याम् ।
२३७ तित्स्वरितम् ।
२३८ तास्यनुदात्तेन्ङिददुपदेशाल्ल-
सार्वधातुकमनुदात्तमह्न्विङि-
न्धिविन्दिखिदिभ्यः ।
२३९ आदिःसिचोऽन्यतरस्याम् ।
२४० सिचआद्युदात्तत्वाऽनिटः प्रति-
पक्षेमध्योदात्तत्वम् ।
२४१ स्वपादिर्हिंसामच्यनिटिङित्य-
जादौ २४२ अभ्यस्तानामादिः
२४३ अनुदात्ते च ।

१०३ २४४ सर्वस्याऽनचकस्य सुपि ।

१०४ २४५ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति

२४६ लिति ।

२४७ आदिर्णमुलन्यतरस्याम् ।

२४८ अचः कर्तृयकि ।

२४९ थलि च सेटीडन्तो वा ।

२५० ञ्नित्यादिर्नित्यम् ।

२५१ आमन्त्रितस्य च ।

२५२ पथिमथोः सर्वनामस्थाने ।

२५३ अन्तश्च तवै युगपत् ।

२५४ क्षयो निवासे ।

२५५ जयः करणम् २५६ वृषादीनाञ्च

२५७ शमरणौ संज्ञायां संमतौ भावकर्मणोः ।

२५८ संज्ञायामुपमानम् ।

२५९ निष्ठा च द्व्यजनात् ।

२६० शुष्कधृष्टौ २६१ आशितः कर्ता

२६२ रिक्ते विभाषा ।

२६३ जुष्टार्पिते च छन्दसि ।

२६४ नित्यं मन्त्रे ।

२६५ युष्मदस्मदोर्ङसि ।

२६६ ङयि च २५७ यतोऽनावः ।

२६७ ईडवन्दवृशंसदुहां ण्यतः ।

२६८ विभाषा वेण्विन्धानयोः ।

२६९ त्यागरागहासकुहश्वठक्रथानाम

२७० उपोत्तमं रिति ।

२७१ चङ्यन्यतरस्याम् ।

२७२ मतोः पूर्वमात्संज्ञायां स्त्रियाम्

२७३ अन्तोऽवत्याः ।

२७४ ईवत्याः १७५ चावतद्धिते ।

२७६ समासस्य ।

★ इति प्रथमः पादः ★

## द्वितीयः पादः

(६—२)

१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ।

२ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।

३ वर्णो वर्णेष्वनेते ।

४ गाधलवणयोः प्रमाणे ।

५ दायाद्यं दायादे ।

६ प्रतिबन्धि चिरकृच्छ्रयोः ।

७ पदेऽपदेशे । ८ निवाते वातत्राणे

९ शारदेऽनार्तवे ।

१० अध्वर्युकषाययोर्जातौ ।

११ सदृशप्रतिरूपयोः सादृश्ये ।

१२ द्विगौ प्रमाणे ।

१३ गन्तव्यपण्यं वाणिजे ।

१४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ।

१५ सुखप्रिययोर्हिते १६ प्रीतौ च

१७ स्वं स्वामिनि १८ पत्यावैश्वर्ये

१९ न भूवाक्चिद्दिधिषु ।

२० वा भुवनम् ।

२१ आशंकाबाधनेदीयस्सु संभावने

२२ पूर्वे भूतपूर्वे ।
२३ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ।
२४ विस्पष्टादीनि गुणवचनेषु ।
२५ अज्यावमकनपापवत्सुभावे कर्मधारये । २६ कुमारश्च ।
२७ आदिः प्रत्येनसि ।
२८ पूगेष्वन्यतरस्याम् ।
२९ इगन्तकालकपालभगालशरावेषु द्विगौ ।
३० वह्वन्यतरस्याम् ।
३१ दिष्टिवितस्त्योश्च ।
३२ सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात् ।
३३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ।
३४ राजन्यवहुवचनद्वन्द्वेऽन्धकवृष्णिषु
३५ संख्या ।
३६ आचार्योपसर्जनश्चान्तेवासी ।
३७ कार्तकौजपादयश्च ।
३८ महान् व्रीह्यपराह्णगृष्टीष्वासजावालभारभारतहैलिहिलरौरवप्रवृद्धेषु ।
३९ क्षुल्लकश्चवैश्वदेवे
४० उष्ट्रः सादिवाम्योः ।
४१ गौः सादसादिसारथिषु ।
४२ कुरुगार्हपतवृजिगार्ह्यतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूसशापण्यकम्बलदासीभाराणां च ।
४३ चतुर्थी तदर्थे ४४ अर्थे ।
४५ क्ते च ४६ कर्मधारयेऽनिष्ठा ।
४७ अहीने द्वितीयानुपसर्गे ।
४८ तृतीया कर्मणि ।
४९ गतिरनन्तरः ।
५० तादौ च निति कृत्यतौ ।
५१ तवै चान्तश्च युगपत् ।
५२ अनिगन्तोऽञ्चतौ वप्रत्यये ।
५३ न्यधी च ।
५४ ईषदन्यतरस्याम् ।
५५ हिरण्यपरिमाणंधने ।
५६ प्रथमोऽचिरोपसंपत्तौ ।
५७ कतरकतमौ कर्मधारये ।
५८ आर्यो ब्राह्मणकुमारयोः ।
५९ राजा च ६० षष्ठी प्रत्येनसि
६१ क्ते नित्यार्थे ।
६२ ग्रामः शिल्पिनि ।
६३ राजा च प्रशंसायाम् ।
६४ आदिरुदात्तः ।
६ सप्तमीहारिणौ धर्म्येऽहरणे ।
६६ युक्ते च ६७ विभाषाऽध्यक्षे
६८ पापं च शिल्पिनि ।
६९ गोत्रान्तेवासिमाणवब्राह्मणेषुक्षेपे ७ अङ्गानि मैरेये ।
७१ भक्ताख्यास्तदर्थेषु ।
७१ गोविडालसिंहसैन्धवेषूपमानम्
७३ अके जीविकार्थे ।
७४ प्राचां क्रीडायाम् ।
७५ अणि नियुक्ते ।
७६ शिल्पिनि चाकृञः ।

७७ संज्ञायां च ।
७८ गोतन्तियवं पाले ७६ णिनि ।
८० उपमानं शब्दार्थप्रकृतावेव ।
८१ युक्तारोह्यादयश्च ।
८२ दीर्घकाशतुषभ्राष्ट्रवटं जे ।
८३ अन्त्यात्पूर्वं बह्वचः ।
८४ ग्रामेऽनिवसन्तः ।
८५ घोषादिषु च ।
८६ छात्र्यादयः शालायाम् ।
८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ।
८८ मालादीनां च ।
८९ अमहन्नव नगरेऽनुदीचाम् ।
९० अर्मे चावर्णं द्व्यच्त्र्यच् ।
९१न भूताधिकसंजीवमद्राश्मकज्जलम्
९२ दिवोदासीनां छन्दसि ।
९३ अन्तः ९४ सर्वंगुणकार्त्स्न्ये ।
९५ संज्ञायां गिरिनिकाययोः ।
९६ कुमार्यां वयसि ।
९७ उदके केवले ।
९८ द्विगौ क्रतौ ।
९९ सभायां नपुंसके ।
१०० पुरे प्राचाम् ।
१०१ अरिष्टगौडपूर्वे च ।
१०२ न हास्तिनफलकमार्देयाः ।
१०३ कुशूलकूपकुम्भशालं बिले ।
१०४ दिक्शब्दा ग्रामजनपदाख्यान-
चानराटेषु ।
१०५ आचार्योपसर्जनश्चान्तेवासिनि
१०६ उत्तरपदवृद्धौ सर्वं च ।
१०७ बहुव्रीहौ विश्वं संज्ञायाम् ।
१०८ उदराश्वेषुषु १०९ क्षेपे ।
११० नदी बन्धुनि ।
१११ निष्ठोपसर्गपूर्वमन्यतरस्याम्
११२ उत्तरपदादिः ।
११३ कर्णो वर्णलक्षणात् ।
११४ संज्ञौपम्ययोश्च ।
११५ कण्ठपृष्ठग्रीवाजंघं च ।
११६ शृङ्गमवस्थायाञ्च ।
११७ नञोऽजरमरमित्रमृताः ।
११८ सोर्मनसी अलोमोषसी ।
११९ क्रत्वादयश्च ।
१२० आद्युदात्तं द्व्यच्छन्दसि ।
१२१ वीरवीर्यौ च ।
१२२ कूलतीरतूलमूलशालाक्षसमम-
व्ययीभावे ।
१२३ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ
१२४ तत्पुरुषे शालादीनाम् ।
१२५ चेलखेटकटुककाण्डं गर्हायाम्
१२६ चीरमुपमानम् ।
१२७ पललसूपशाकं मिश्रे ।
१२८ कूलसूदस्थलकर्षाः संज्ञायाम्
१२९ अकर्मधारये राज्यम् ।
१३० वर्ग्यादयश्च १३१ पुत्रः पुम्भ्यः
१३२ नाचार्यराजर्त्विक्संयुक्तज्ञात्या-
ख्येभ्यः ।
१३३ चूर्णादीन्यप्राणिषष्ठ्याः ।
१३४ षट् च काण्डादीनि ।
१३५ कुण्डं वनम् ।
१३६ प्रकृत्या भगालम्
१३७ शितेर्नित्याबह्वज्बहुव्रीहावभसत्

१४० प्रतिकारकोपपदात् कृत् ।
१४१ उभे वनस्पत्यादिषु युगपत्
१४२ देवता द्वन्द्वे च ।
१४३ नोत्तरपदेऽनुदात्तादावपृथिवी-
रुद्रपूषमन्थिषु ।
१४४ अन्तः ।
१४५ थाथघञ्क्ताजबित्रकाणा ।
१४६ सूपमानात्क्तः ।
१४७ संज्ञायामनाचितादीनाम् ।
१४८ संहिता गवि ।
१४९ प्रवृद्धादीनां च ।
१५० कारकाद्दत्तश्रुतयोरेवाशिषि ।
१५१ इत्थम्भूतेन कृतमिति च ।
१५१ अनो भावकर्मवचनः ।
१५३ मन्क्तिन्व्याख्यानशयनासनस्-
थानयाजकादिक्रीताः ।
१५४ सप्तम्याः पुण्यम् ।
१५५ ऊनार्थकलहं तृतीयायाः ।
१५६ मिश्रं चानुपसर्गमसंधौ ।
१५७ नञो गुणप्रतिषेधे संपाद्यर्ह-
हितालमर्थास्तद्धिताः ।
१५८ ततयोश्चातदर्थे ।
१५९ अच्कावशक्तौ ।
१६० आक्रोशे च ।
१६१ संज्ञायाम् ।
१६२ कृत्योकेष्णुच्चार्वादयश्च ।
१६३ वर्तमानवर्धमानत्वरमाणध्रि-
यमाणक्रियमाणरोचमानशोभ-
मानाः संज्ञायाम् ।
१६४ विकारसदृशौ व्यस्तसमस्तौ ।
१६५ राजाह्लोश्छन्दसि ।
१६६ विभाषा तृन्नन्नतीक्ष्णशुचिषु ।
१६७ बहुव्रीहाविदमेतत्तद्भ्यः प्रथ-
मपूरणयोः क्रियागणने ।
१६८ संख्यायाः स्तनः ।
१६९ विभाषा छन्दसि ।
१७० संज्ञायामनजिनस्य ।
१७१ मित्रस्य चानृषौ ।
१७२ व्यवायिनोऽन्तरम् ।
१७३ मुखं स्वाङ्गम् ।
१७४ नाव्ययदिक्शब्दगोमहत्स्थूल-
मुष्टिपृथुवत्सेभ्यः ।
१७५ निष्ठोपमानादन्यतरस्याम् ।
१७६ जातिकालसुखादिभ्योऽनाच्छा-
दनात्क्तोऽकृतमितप्रतिपन्नाः ।
१७७ वा जाते १७८ नञ्सुभ्याम् ।
१७९ कपि पूर्वम् ।
१८० ह्रस्वान्तेऽन्त्यात्पूर्वम् ।
१८१ बहोर्नञ्वदुत्तरपदभूम्नि ।
१८२ न गुणादयोऽवयवाः ।
१८३ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ।
१८४ वनं समासे १८५ अन्तः ।
१८६ अन्तश्च १८७ न निविभ्याम्
१८८ परेरमितोभाविमण्डलम् ।
१८९ प्रादस्वाङ्गं संज्ञायाम् ।
१९० निरुदकादीनि च ।
१९१ परेर्हस्तपादकेशकर्षाः ।
१९२ अभेर्मुखम् १९३ अपाच्च ।
१९४ स्फिगपूतवीणाञ्जोऽध्वकु-
क्षिसीरनाम नाम च ।

१९५ अधरूपरिस्थम् ।
१९६ अनोरप्रधानकनीयसी ।
१९७ पुरुषश्चान्वादिष्टः ।
१९ अतेर्धातुलोपेऽकृत्पदे ।
१९९ नेरनिधाने ।
२०० प्रतेरंश्वादयस्तत्पुरुषे ।
२०१ उपाद् द्व्यजजिनमगौरादयः ।
२०२ सोरवक्षेपणे ।
२०३ विभाषोत्पुच्छे
२०४ द्वित्रिभ्यां पाद्न्मूर्धसु बहुव्रीहौ
२०५ सक्थं चाक्रान्तात्
२०६ परादिश्छन्दसि बहुलम् ।
२०७ तिचक्रादयश्च नित्यं परेऽन्त्यः
२०८ मरुद्वृद्धादीनां पूर्वपदान्तोदात्तत्वम् ।
२०९ दिवोदासादीनां पूर्वपदाद्युदात्तत्वम् ।

इति द्वितीयः पादः

## तृतीयः पादः

(६ ३)

१ अलुगुत्तरपदे ।
२ पञ्चम्याः स्तोकादिभ्यः ।
३ ब्राह्मणाच्छंसिनः ।
४ ओजःसहोम्भस्तमोऽञ्जसस्तृतीयायाः ५ पुंसानुजजनुषान्धौ ।
६ मनसः संज्ञायाम् ।
७ आज्ञायिनि च ।
८ आत्मनश्च पूरणे ।
९ वैयाकरणाख्यायां चतुर्थ्याः ।
१० परस्य च ।
११ हलन्तात्सप्तम्याः संज्ञायाम् ।
१२ हृद्द्युभ्यां च ।
१३ कारनाम्नि च प्राचां हलादौ
१४ मध्याद्गुरौ ।
१५ अमूर्धमस्तकात्स्वाङ्गादकामे ।
१६ बन्धे च विभाषा ।
१७ तत्पुरुषे कृति बहुलम् ।
१८ प्रावृट्शरत्कालदिवां जे ।
१९ विभाषा वर्षक्षरशरवरात् ।
२० घकालतनेषु कालनाम्नः ।
२१ शयवासवासिष्वकालात् ।
२२ अपो योनियन्मतिषु ।
२३ नेन्सिद्धबध्नातिषु च ।
२४ स्थे च भाषायाम् ।
२५ षष्ठ्या आक्रोशे ।
२६ वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुक् ।
२७ आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकासु च ।
२८ देवानांप्रियश्च ।
२९ संज्ञायां शुनश्शेपपुच्छलाङ्गूलेषु ३० दिवश्च दासे ।
३१ पुत्रेऽन्यतरस्याम् ।
३२ ऋतो विद्यायोनिसम्बन्धेभ्यस्त-

रसम्वन्ध्युत्तरपदे ।
३३ विभाषा स्वसृपत्योः ।
३४ आनङ् ऋतो द्वन्द्वे ।
३५ देवताद्वन्द्वे च ।
३६ वायोर्नोभयत्र ।
३७ ईदग्नेः सोमवरुणयोः ।
३८ इद्वृद्धावविष्णोः ३९ दिवोद्यावा
४० अद्वन्द्वेऽपि ४१ दिवश्च पृथिव्याम
४२ उषासोषसः ।
४३ मातरपितरावुदीचाम ।
४४ पितरामातरा च छन्दसि ।
४५ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।
४६ तसिलादिष्वाकृत्वसुचः
४७ शसिवह्वल्पार्थस्य ।
४८ त्वतलोर्गुणवचनस्य ।
४९ भस्याढे तद्धिते ।
५० ठक्छसोश्च ५१ क्यङ् मानिनोश्च
५२ न कुतद्धितकोपधायाः ।
५३ संज्ञापूरण्योश्च ।
५४ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ।
५५ स्वाङ्गाच्चेतोऽमानिनि ।
५६ जातेश्च ।
५७ पुंवत्कर्मधारयजातीयदेशीयेषु
५८ कुक्कुटयादीनामण्डादिषुवा ।
५९ खिद्वादिषु ह्रस्वत्वं विप्रतिषधेन
६० घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।
६१ अकृन्नद्याः शेषस्यान्यतरस्याम्
६२ उगितः पुंवद्भावश्च वा ।
६३ आन्महतः समानाधिकरणजातीययोः ।
६४ घासकरविशिष्टेषु चासमानाधिकरणे ।
६५ अष्टनः कपाले हविषु ।
६६ गवि च युक्ते ।
६७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः प्राक्शतात् ६८ त्रेस्त्रय
६८ त्रिभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ।
६९ हृदयस्य हृल्लेखयदण लासेषु ।
७० वा शोकष्यञ्रोगेषु ।
७१ पादस्य पदाज्यातिगोपहतेषु ।
७२ पद्यत्यतदर्थे ।
७३ इके चरतौ च ।
७४ हिमकापिहतिषु च ।
७५ ऋचः शे ।
७६ वा घोषमिश्रशब्दनिष्केषु ।
७७ उदकस्योदः संज्ञायाम्
७८ संज्ञायामुत्तरपदस्य च ।
७९ पेषवासवाहनधिषु च ।
८० एकहलादौ पूरयितव्येऽन्यतरस्याम्
८१ मन्थौदनसक्तुविन्दुवज्रभारहारवीवधगाहेषु च ।
८२ इको ह्रस्वोऽङयो गालवस्याऽनियङ वङ भाविनामव्ययानाम-भ्रुकुसादीनाम ।
८३ भ्रुवोऽकारः कुसादिष्वित्येके ।

